ततो निवृत्त्य योगीन्द्र इदमाह सनन्दनम् ।
कायान्तरं प्रविश्यैव ज्ञेयं प्रश्नोत्तरं मया ।। ३२ ।।

वापिस आकर पद्मपाद से कहा कि परकाय प्रवेश करके ही प्रश्नोत्तर की जानकारी मुझे प्राप्त करनी होगी ।। ३२ ।।

नैतद्युक्तं गुरो सर्वं वेत्ति तावद् भवान् स्वयम् ।
अदृष्टमपि पश्यन्ति कवयः पारदर्शिनः ।। ३३ ।।

पद्मपाद ने कहा—गुरुदेव ! यह उचित नहीं है। आप स्वयं सब जानते हैं। पारदर्शी कवि अदृष्ट को भी देखते हैं ।। ३३ ।।

पुरा मत्स्येन्द्रनाथो हि परासोः सिंहलेशितुः ।
प्रविश्य कायं योगीन्द्रस्तत्पत्तनमुपेयिवान् ।। ३४ ।।

पहले की बात है—सिंहलराजा के मृत शरीर में मत्स्येन्द्रनाथ प्रविष्ट होकर उनके नगर में गये ।। ३४ ।।

तत्र सर्वसमृद्धिं च मृतोत्थानं च चिन्तयन् ।
सचिवो दिव्यपुरुषं कंचिदेनमन्यत ।। ३५ ।।

राज्य में वड़ी समृद्धि हुई। इधर मृतोत्थान हुआ। मन्त्री ने निश्चय किया कि यह कोई दिव्यपुरुष योगी अवश्य होगा ।। ३५ ।।

तं वशीकर्त्तुमाहासौ सुकुमारीः कुमारिकाः ।
गीताभिनयलास्याद्यै रुपास्थिषत ता यतिम् ।। ३६ ।।

मत्स्येन्द्रनाथ को वश में करने के लिये मन्त्री ने सुन्दर कुमारियों को आज्ञा दी। वे गीतनृत्यादि से योगी को प्रसन्न करने लगीं ।। ३६ ।।

लीलाविलासलोलाभिस्ताभिर्योगी वशीकृतः ।
समाधिं स च विस्मृत्य बभूव प्राकृतो यथा ।। ३७ ।।

नाना लीलाविलासों से उन कुमारियों ने योगी को वश में किया और मत्स्येन्द्रनाथ भी समाधि भूलकर प्राकृत मनुष्य जैसे हो गये ।। ३७ ।।

तत्तनूरक्षको योगी गोरक्षः समुपेत्य तम् ।
अन्तरङ्गस्वरूपेण प्रतिबोध्यानयद् गुरुम् ।। ३८ ।।

मत्स्येन्द्रनाथ के शरीररक्षक गोरखनाथ ने देखा कि गुरु जी फँस रहे हैं तो वहाँ अन्तरंगरूप से आये और ढोलक पर ही "चेत मछंदर गोरख आया" बजा कर गुरु को उद्वोधित किया और वापिस ले गये ।। ३८ ।।

तस्माद्विषयरागेऽस्मिन् दुर्दमे न प्रमाद्यते ।
ऊर्ध्वरेतोव्रतं नः क्व क्व गर्ह्यं मदनोर्जितम् ॥ ३९ ॥

इसलिये दुर्दम विषय राग के बारे में प्रमाद न करना उचित है। कहाँ हमारा ऊर्ध्वरेतोव्रत और कहाँ कामसेवन ॥ ३९ ॥

पद्मपादवचः श्रुत्वा समवोचत देशिकः ।
मा स्म भूश्चिन्तितो ह्यत्रासङ्गे मयि कथंचनं ॥ ४० ॥

आचार्य ने कहा मेरे बारे में तुम निश्चन्त रहो मैं सर्वथा असंग हूँ ॥४०॥

मत्स्येन्द्रः शिष्यसन्देहगर्वाद्यपनिनीषया ।
एकेन लोलामतनोदन्येन वपुषा तपः ४१ ॥

मत्स्येन्द्रनाथ की बात में यथार्थता इस प्रकार है कि गोरक्षनाथ का संदेह गर्वादि दूर करने के लिये एक शरीर से परकाय प्रवेश किया और अन्य शरीर से तप किया ॥ ४१ ॥

किं च नासङ्गिनः कामो हरेर्गोपीपतेर्यथा ।
तथा विधिनिषेधौ च स्यातामज्ञस्य नो कवे : ॥ ४२ ॥

अन्य बात—संग हीन को काम होता ही नहीं जैसे गोपीपति कृष्ण को। और भी बात यह कि विधि और निषेध अज्ञानी को होता है ज्ञानी को नहीं ॥ ४२ ॥

अश्वमेधसहस्त्राणि ब्रह्महत्यायुतानि च ।
कुर्वन् पुण्यैश्च पापैश्च लिप्यते नैव तत्त्ववित् ॥ ४३ ॥

शास्त्रवचन है कि तत्त्ववित् हजारों अश्वमेध करें चाहे हजारों ब्रह्महत्या। न उसे पुण्य होता है और न पाप ही ॥ ४३ ॥

त्रिशीर्षमहनच्छालावृकेभ्योऽदाद्यतीन् बहून् ।
नातोऽभोयत लोमापि हीन्द्रस्येति श्रुतेर्वचः ॥ ४४ ॥

इन्द्र ने त्रिशीर्षा को मारा, अनेक यतियों को भेड़ियों का भोज्य बना दिया, फिर भी उसका बाल भी बाँका नहीं हुआ, यह श्रौत वचन है ॥४४॥

ईजे यज्ञेन च बहुदक्षिणेन महामतिः ।
न तत्फलेन जनको वैदेहो लिप्यते स्म सः ॥ ४५ ॥

बहुदक्षिण अनेक यज्ञ राजा जनक ने किया। किन्तु उसके फल से जनक लिप्त नहीं हुए ॥ ४५ ॥

**न कर्मणा वर्धते वा कनीयान् वा यथार्थवित् ।**
**नैनं कृताकृते चापि तपतस्तत्त्ववेदिनम् ॥ ४६ ॥**

तत्त्ववेत्ता कर्म से बढ़ता या घटता नहीं ! उसे कृत या अकृत सन्तप्त नहीं करते ॥ ४६ ॥

**आत्मत्वेन समं पश्यन्नकर्त्ता नैव लिप्यते ।**
**वज्रोलियोगे यत्यादेर्नावकीर्णित्वमिष्यते ॥ ४७ ॥**

सर्वात्मदर्शी अकर्ता होने से लिप्त नहीं होता । और वज्रोलियोग में यति आदि भी अवकीर्णी नहीं माने जाते ॥ ४७ ॥

**किं च वर्णाश्रमाचाराः शारीरा न किलात्मगाः ।**
**न संन्यस्तमृतोऽन्यस्मिन् भवे भवति नो गृही ॥ ४८ ॥**

और भी बात यह है कि वर्णाश्रमादि धर्म शरीरगत होते हैं । आत्मगत नहीं । संन्यासी होकर जो मृत होता है वह अन्य शरीर में क्या गृही नहीं होते ॥ ४८ ॥

**तस्मात्संन्यस्तदेहेन गृहित्वे पतनं भवेत् ।**
**भवेच्च श्रुतिमर्यादाभेदो नान्येन वर्ष्मणा ॥ ४९ ॥**

सभी कुछ मान लिया जाय । अर्थात् कर्तृत्व भोक्तृत्वादि भी मान लिया जाय तो भी संन्यस्त शरीर से गृही होने में ही पतन होता है और श्रुति-मर्यादोल्लंघन होता है । अन्य शरीर से नहीं । (संन्यस्तमृत का द्वितीय जन्म गृही हो सकता है यह बता चुके) ॥ ४९ ॥

**पदचारिदुरारोहं गिरिशृङ्गमुपेत्य च ।**
**शिष्यान् गोप्तुं नियुज्यात्मशरीरं योगिपुङ्गवः ॥ ५० ॥**
**आकृष्याङ्गुष्ठतो मूर्ध्नो बहिरेत्य स्ववर्ष्मणः ।**
**मूर्ध्नः प्रविश्य भूपालकायमाऽऽङ्गुष्ठमोयिवान् ॥ ५१ ॥**

इतना कहने के बाद आचार्य शिष्य सहित पदचारीयों के लिये जहाँ चढ़ना अशक्य है ऐसे गिरिशृङ्ग पर पहुँचे और शिष्यों को शरीररक्षार्थ नियुक्त किया । फिर अंगुष्ठ से जीवात्मा को खींचकर क्रमशः सर्व शरीर से मूर्ध प्रदेश से बाहर निकले और उस राजा के मूर्धा से प्रविष्ट होकर अंगुष्ठ तक व्याप्त हो गये ॥ ५०-५१ ॥

चेतनां समनुप्राप्य हृदयस्पन्दनक्रमात् ।
उदतिष्ठन्महीपालो हर्षिता योषितोऽखिलाः ॥ ५२ ॥

शरीर में चेतना आयी। हृदयस्पन्दन होने लगा। राजा अमरुक उठ बैठे। समस्त रानियां एकाएक हर्षित हो उठी ॥ ५२ ॥

तं प्राप्तजीवनमवेक्ष्य पतिं प्रभूत-
हर्षस्वनः समवृणोद्वनितागणस्तम् ।
निर्वर्ण्य तन्नृपतिमीयुरमात्यमुख्या ।
दध्मुश्च शङ्खपणवादिमनीकमुख्याः ॥ ५३ ॥

राजा को जीवन प्राप्त देखकर हर्ष से रानियां किलकिलाने लगीं। उसे देखकर अमात्यादि वहाँ दौड़ आये और इधर सेना नायक शंखादि बजाने लगे ॥ ५३ ॥

शंकराचार्यचरिते जयमङ्गलगुम्फिते ।
नवमः समगाद् भारत्याचार्यकथया युतः ॥ ९ ॥



## अथ दशमः सर्गः

उत्थितः कृतमाङ्गल्यो नृपतिर्गजमास्थितः ।
पुरीमभ्येत्य पृथिवीं शशास दिवमिन्द्रवत् ॥ १ ॥

राजा ने उठकर माङ्गलिक कर्म किया। फिर गज़ारूढ़ हो पुरी में पहुँच कर पृथिवी पर उसी प्रकार शासन किया जिस प्रकार स्वर्ग पर इन्द्र ॥ १ ॥

तं दिव्यगुणसम्पन्नमपूर्वमतिवैभवम् ।
अवेक्ष्य मन्त्रिप्रवराः संशयं प्रतिपेदिरे ॥ २ ॥

उनकी दिव्यगुणसम्पत्ति, और अपूर्व बुद्धिवैभव देखकर बुद्धिमान् मन्त्रियों को संशय होने लगा ॥ २ ॥

दाने ययातिवद्वाचि गुरुवद्युधि पार्थवत् ।
ज्ञाने गिरिशवत्कोऽयं प्रविष्टोऽस्ति मृतोत्थितः ॥ ३ ॥

दान में ययाति के समान उदार, वाणी में बृहस्पति के समान चतुर, युद्ध में अर्जुन के समान वीर और ज्ञान में शङ्कर के समान निर्भ्रान्त यह कौन है जो मृतशरीर में प्रविष्ट होकर उठा ॥ ३ ॥

**अनृतौ पुष्पिता वृक्षा बहुदुग्धाश्च धेनवः ।**
**सस्याढ्या पृथिवी सर्वा सर्वा धर्मरताः प्रजाः ॥ ४ ॥**

ऋतु के विना भी पुष्प खिल रहे हैं, गायें दूध बहुत दे रही हैं, सारी पृथिवी सस्यसंपन्न हो रही है और समस्त प्रजा धर्मतत्पर हो रही हैं ॥ ४ ॥

**अयं योगीश्वरः कश्चिन्मा प्रापत् पूर्वकं वपुः ।**
**इति मन्त्रं प्रचक्रुस्ते परस्परमतन्द्रिताः ॥ ५ ॥**

अवश्य यह कोई योगीश्वर है। परन्तु यह फिर वापिस पूर्वशरीर में न चले जाय, इस प्रकार बड़ी सावधानी से वे मन्त्रणा करने लगे ॥ ५ ॥

**न्ययोजयंश्च भृत्यांस्ते यत्र क्वापि गतासुकम् ।**
**शरीरं दृश्यते तद्धि ज्वलयन्त्वविचारिताः ॥ ६ ॥**

उन्होंने भृत्यों को भी यह कहकर नियुक्त किया कि जहाँ भी मृत शरीर पाया जाय तुरन्त उसे जलाओ ॥ ६ ॥

**वात्स्यायनीयं सूत्रं च भाष्यं चावेक्ष्य भूपतिः ।**
**स्वयं व्यधत्ताभिनवं निबन्धं कामबन्धुरम् ॥ ७ ॥**

राजा ने वात्स्यायनीय कामसूत्र तथा भाष्य देखकर स्वयं एक काम सम्बन्धी अभिनव ग्रन्थ बनाया [ द्रष्टव्यः—अमरुकशतक जो आज प्रसिद्ध है वही उक्तग्रन्थ है ऐसी कुछ विद्वानों की मान्यता है ] ॥ ७ ॥

**रक्षन्तश्च वपुस्तस्य शिष्यास्तेऽन्योन्यमूचिरे ।**
**मासावधिर्व्यतीतोऽद्य नैवायातस्तु देशिकः ॥ ८ ॥**

आचार्यशरीर की रक्षा करते हुए सिष्यों ने कहा—एक मास की अवधि वीत गयी। अभी तक आचार्य नहीं आये ॥ ८ ॥

**किं कुर्मो मृगयामः क्व कथं विद्याम कुत्र सः ।**
**इत्येवं व्यथितेष्वाह पद्मपादो महामुनिः ॥ ९ ॥**

क्या करें ? कहाँ ढूंढ़ें ? कहाँ हैं आचार्य यह मालूम कैसे हो, इस प्रकार सब व्यथित थे। तब पद्मपाद बोले ॥ ९ ॥

छन्ना पात्रेण कस्तूरी छन्नः स्वर्भानुना शशी ।
छन्नोऽन्यवपुषास्माकं गुरुश्चेति त्रयः समाः ॥ १० ॥

कस्तूरी बरतन से ढक दी, राहु से चन्द्रमा ग्रस्त हुआ, अन्य शरीर में हमारे गुरु छिप गये, ये तीनों बराबर हैं। अर्थात् छिपाने पर भी छिप नहीं सकते ॥ १० ॥

समृद्धिर्धर्मनिरतिः सुखं शान्तिर्धृतिः स्मृतिः ।
यत्र देशे प्रदृश्येरंस्तत्रास्मद्देशिको भवेत् ॥ ११ ॥

जिस देश में समृद्धि धर्मनिष्ठा, सुख, शान्ति, धैर्य, स्मृति आदि गुण विशेषरूप से दिखाई दें वहीं हमारे गुरु होंगे ॥ ११ ॥

विमृश्यैवं वपुर्गुप्त्यै शिष्यान्निर्दिश्य कांश्चन ।
अन्यैः सहाम्बुजपदो निरगान्मार्गितुं गुरुम् ॥ १२ ॥

इस प्रकार विचार कर गुरुशरीररक्षार्थ कुछ शिष्यों को वहीं रखकर अन्यों के साथ गुरुजी की खोज के लिये पद्मपाद जी निकले ॥ १२ ॥

इतस्ततो ययुः सर्वे शैलाच्छैलं वनाद्वनम् ।
ग्रामं ग्रामादमरुकक्ष्माभृद्विषयमन्ततः ॥ १३ ॥

इधर उधर वे चल पड़े (क्योंकि उनको यह मालूम नहीं था कि किसी राजा के शरीर में प्रविष्ट हुए हैं या साधारण मनुष्य के शरीर में) एक पर्वत से दूसरा पर्वत, एक जंगल से दूसरा जंगल एक गाँव से दूसरा गाँव इस प्रकार चलते चलते आखिर वे राजा अमरुक के राज्य में पहुँचे ॥ १३ ॥

भूपं मृतोत्थितं श्रुत्वा वीक्ष्य राज्यं समृद्धिमत् ।
राजप्रशंस्ति चाकर्ण्य दैन्यं मोहं च ते जहुः ॥ १४ ॥

राजा मरकर उठे, यह बात सुनी। राज्य को समृद्धिशाली देखा। सभी राजा की प्रशंसा कर रहे थे। इन सब बातों से वे सर्वथा संशयरहित होकर दैन्य एवं मोह से रहित हुए ॥ १४ ॥

धृत्वा गायकवेषांस्ते विविशुर्नृपमन्दिरम् ।
द्वितीयमिव माहेन्द्रसदनं मदनाङ्गणम् ॥ १५ ॥

गायक वेष लेकर द्वितीय इन्द्रसदन समान अति मनोहर राज सदन में वे प्रविष्ट हुए ॥ १५ ॥

रमणीशतमध्यस्थं तत्र दिव्यप्रभं प्रभुम् ।
तारागणगतं चन्द्रमिव व्यैक्षन्त ते नृपम् ॥ १६ ॥

सैकड़ों रमणियों के बीच में दिव्यकान्ति वाले राजा उसी प्रकार शोभा पा रहे थे जैसे तारों के बीच में चन्द्रमा ॥ १६ ॥

नेत्रसंज्ञावितीर्णोपवेशनास्ते च भूभुजा ।
प्राप्यानुज्ञां जगुर्गीतं मूर्च्छनाभिर्मृदुस्वरम् ॥ १७ ॥

इशारे से ही राजा ने उन्हें बैठने को कहा। फिर आज्ञा पाकर वे सुन्दर स्वर से गीत गाने लगे ॥ १७ ॥

मधुकर सुमनोभूषण सरसम्, कमलवनोद्भवकुसुमरसम् ।
हन्त निपीय पुरा पुनरधुना, कथमिव वाञ्छसि कुटजरसम् ।१८।

हे भ्रमर, फूलों के तुम आभूषण हो। कमल वन में उत्पन्न सरस मधु को पीने वाले हो। किन्तु यह कैसा आश्चर्य कि उस मधु को पीकर फिर इस कड़वे कुटज रस में तुम्हारा मन लगा। दूसरा अर्थ:—मधुब्राह्मणोक्त मधुरूपी ब्रह्म रस को शिष्यों को पिलाने वाले, सुमनोभूशण = विद्वानों के भूषण ! आप हृदय कमलादि में वननीय—सेवनीय ब्रह्म से उद्भूद सरस आनन्द रस का पान कर अब इस कड़वे संसार रस पर क्यों मोहित हो रहे हैं ॥ १८ ॥

शुकवर भङ्गमगान्नभसङ्गम, क्वचन गतौ ते नहि नहि जङ्गम ।
बन्धुरहाटकपिञ्जरमध्ये, गमनधुरन्धर बन्धं मा गमः ॥ १९ ॥

हे शुकवर ! तुम गगन में विचरण करने वाले हो। तुम गतिशील हो। तुम्हारी गति में कहीं भी रुकावट आज तक नहीं आयी। हाँ, स्मरण रखो कि सुन्दर सोने के पिञ्जरे के बन्धन में कहीं नहीं फँस जाना ॥ १९ ॥

नेति नेतिगीर्मूर्त्तामूर्त्ते, प्रतिषेधनतः परमवधिम् ।
साधयते यमनन्तमबाधम्, ब्रह्म परं यत्तत्त्वमसि ब्रह्म० (२)।२०।

नेति नेति श्रुति मूर्त्त और अमूर्त्त का प्रतिषेध कर परम अवधि जिस अनन्त अबाध ब्रह्म को बोधित करती है वही तुम हो ॥ २० ॥

अन्नमयादिषु तादात्म्यगतं, यं प्रवृहन्ति बृहन्तमजम् ।
मुञ्जात्सुकविरिषीकामिव सद्, ब्रह्म परं यत्तत्त्वमसि ब्रह्म० २१

अन्नमय प्राणमयादि में तादात्म्य को प्राप्त हुए जिस वृहत् आत्मा को मूँज से इषीक (सींक) के समान खींचकर अलग किया जाता है वही ब्रह्म तुम हो ॥ २१ ॥

**जाग्रत्स्वप्नसुषुप्तिषु नित्यं, व्यावृत्तास्वप्यनुवृत्तम् ।**
**व्यावर्त्त्य जडात्स्वस्थमभूद्यद्, ब्रह्म परं यत्तत्त्वमसि (२) ॥२२॥**

जाग्रत् स्वप्न एवं सुषुप्ति में जो कि परस्पर पृथक् है अनुवृत्त जिस ब्रह्म को जड़ से अलग कर मानव स्वरूपस्थित होता है वही ब्रह्म तुम हो ॥ २२ ॥

**कनकमयं खलु कुण्डलकङ्कणमखिलं कार्यं कनककृतम् ।**
**यन्मयमेवं जगदखिलमिदं, ब्रह्म परं यत्तत्त्वमसि (२) ॥२३॥**

सुवर्णोत्पन्न कङ्कण कुण्डलादि जिस प्रकार सुवर्णमय होता है वैसे ब्रह्म से उत्पन्न जगत् भी ब्रह्ममय है । वही ब्रह्म तुम हो ॥ २३ ॥

**चक्षुर्वर्त्ती मण्डलवर्त्ती, योऽसौ सोऽसौ सोऽहमिति ।**
**व्यतिहृत्य जगुर्वेदविदो यं, ब्रह्म परं यत्तत्त्वमसि (२) ॥२४॥**

जो चक्षु में है वही मण्डन (सूर्यमण्डल) में है । जो वह सो मैं । जो मैं सो वह । इस प्रकार व्यतिहार कर जिसको वेदवेत्ता बोलते हैं वही ब्रह्म तुम हो ॥ २४ ॥

**यज्ञैर्दानैर्नित्यतपोभिः श्रुत्यनुवचनैरपि सन्तः ।**
**जिज्ञासन्ते यत् परतत्त्वं ब्रह्म परं यत्तत्त्वमसि (२) ॥२५॥**

यज्ञ, दान, तप एवं वेदानुवचन से सन्त जिस परतत्व की जिज्ञासा करते हैं वही ब्रह्म तुम हो ॥ २५ ॥

**शान्तो दान्त उपरतो भिक्षुर्द्वन्द्वतितिक्षुः समवहितः ।**
**श्रद्धालुर्यं पश्यत्यात्मनि ब्रह्म परं यत्तत्त्वमसि (२) ॥२६॥**

शान्त, दान्त, उपरत, तितिक्षु, समाहित, श्रद्धालु जिसको आत्मा में ही दर्शन करते हैं वह ब्रह्म तुम ही हो ॥ २६ ॥

**नित्यं शुद्धमनन्तं बुद्धम्, सत्यं वाङ्मनसाविषयम् ।**
**आनन्दतनुः स्वप्रभमभयं ब्रह्म परं यत्तत्त्वमसि (२) ॥२७॥**

नित्य, शुद्ध, बुद्ध, अनन्त, सत्य, वाणी मन का अविषय आनन्दस्वरूप स्वयं प्रकाश जो अभय ब्रह्म है वही तुम हो ॥ २७ ॥

**इत्थं प्रबोधितो राजा पद्मपादादिभिर्मुदा ।**
**आत्मानं प्रत्यभिज्ञाय संतोष्य विससर्ज तान् ॥ २८ ॥**

पद्मपादादि के द्वारा इस प्रकार प्रवोधित होने पर राजा ने अपनी आत्मा को पहचाना । उन्होंने गायकों को संतुष्ट कर विसर्जन किया ॥२८॥

**मूर्च्छां त्वरितमापन्नो निरगच्छत्ततस्तनोः ।**
**पूर्वं वपुरुपागत्य प्रविवेश त्वरायुतः ॥ २९ ॥**

तुरन्त राजा मूर्छित हुए और उस शरीर को छोड़कर पूर्व शरीर में शीघ्र ही प्रविष्ट हुए ॥ २९ ॥

**तावन्मन्त्रिभटास्तत्र समागत्यानसुं तनुम् ।**
**निषिद्धा अपि शिष्यौघैर्बद्ध्वाऽनलमवीविशन् ॥ ३० ॥**

तब तक मन्त्रियों के भेजे गये आदमी वहाँ पहुँच चुके थे । शिष्यों के रोकने पर भी आचार्य शरीर को वांधकर अग्नि में प्रवेश करा चुके थे ॥ ३० ॥

**तुष्टाव देशिकस्तर्हि वरुणं करुणानिधिम् ।**
**तुष्टः स शमयामास त्वरितं जातवेदसम् ॥ ३१ ॥**

आचार्य ने उस समय वरुण की स्तुति की । संतुष्ट हुए वरुण ने शीघ्र ही अग्नि को शान्त किया ॥ ३१ ॥

**ततः सशिष्यः समगान्मण्डनौको जगद्गुरुः ।**
**दृष्ट्वा संहृष्टवदनो मण्डनस्तमपूजयत् ॥ ३२ ॥**

वहाँ से शिष्यों के साथ आचार्य मण्डन के घर आये । मंडन उन्हें देख कर प्रसन्न हुए, उनकी पूजा की ॥ ३२ ॥

**स सत्यवाग्दृढप्रज्ञः पतित्वा पदयोः सुधीः ।**
**गेहदेहादिकं सर्वमाचार्याय न्यवेदयत् ॥ ३३ ॥**

सत्यवचन दृढ़प्रज्ञ मण्डन ने आचार्य के चरणों में पड़कर गृहदेहादि सभी आचार्य को निवेदन किया ॥ ३३ ॥

प्रणम्य चरणाम्भोजं प्राह चोभयभारती ।
विजितास्मि न शास्त्रार्थे संप्रत्यास्ते प्रयोजनम् ॥ ३४ ॥

उभयभारती भी आचार्य के चरणों में प्रमाण कर बोली कि मुझे जीत लिया, अब शास्त्रार्थ का प्रयोजन नहीं है ॥ ३४ ॥

सर्वज्ञेन भवेद् भाव्यं गुरुणा भारतीपतेः ।
इत्यकार्षमहं प्रश्नं कामशास्त्रे क्षमस्व तत् ॥ ३५ ॥

भारती पति के गुरु को सर्वज्ञ होना चाहिये इसके लिये कामशास्त्र में मैंने प्रश्न किया । धृष्टता के लिए क्षमा करेंगे ॥ ३५ ॥

अनुज्ञां देहि मे गन्तुमित्युक्त्वामन्त्र्य देशिकम् ।
तत्रैवान्तर्दधे देवी वाग्देव्युभयभारती ॥ ३६ ॥

अब आप मुझे जाने के लिये अनुज्ञा दें ऐसा कह कर आमन्त्रण कर (गुजराती में पधार जो कहना) वाग्देवी उभयभारती वहीं अन्तर्धान हो गयी [ द्रष्टव्यः—पहले वनदुर्गामन्त्र से बाँधना बताया था । उस समय जाने को जो तैयार हो गयी थी वह फिर मण्डन पर अर्धविजय का आरोप कैसे लगाती, स्वयं शास्त्रार्थ के लिये तैयार कैसे हुई, फिर अब अनुज्ञा लेकर कैसे चल पड़ी इत्यादि बातें कुछ संशयोत्पादक जैसी हैं । अतएव कुछ मनीषी यहाँ यह कल्पना करते हैं कि भिन्न भिन्न प्रसिद्धियों का माधवाचार्य ने एकत्र संग्रह किया । अर्थात् किसी ग्रन्थ में वनदुर्गामन्त्र से बन्धनपर्यन्त मण्डन कथा समाप्त हो जाती है । दूसरे ग्रन्थ में वनदुर्गा से बन्धन कथा नहीं किन्तु परकायप्रवेशादि सहित अन्त में भारती का गमन है । अस्तु । हम संगति इस प्रकार बैठा कर अब आगे चलेंगे कि प्रथम आचार्य ने मन्त्र से अवरोध किया । तब आचार्य की सर्वज्ञता संपादनार्थ ही अर्धविजय का बहाना बनाकर शास्त्रार्थ प्रारम्भ किया । परकाय प्रवेशोत्तर सर्वज्ञता सिद्ध होने पर अंशतः आचार्यनिर्दिष्ट स्थान में अपनी शक्ति रखकर स्वरूपतः ब्रह्मलोक गयी । इस प्रकार संगति के बैठाने के बाद बुद्धिवादी जो भी अर्थ कर लें ॥ ३६ ॥

प्रयान्तीं तां गिरां देवीमन्तर्धानगतामपि ।
योगशक्त्या समालोक्य बभाषे भाष्यकृन्मुदा ॥ ३७ ॥

अन्तर्धान होकर जाती हुई भी वाणी देवी को योग शक्ति से भाष्यकार ने देखकर कहा ॥ ३७ ॥

जानामि त्वां गिरां देवीं त्वं विद्या शारदा सती ।
क्षेत्रे त्वमृष्यश्रृङ्गादौ संनिध्यं कल्पय स्वकम् ॥ ३८ ॥

मैं समझता हूँ कि आप वाणी देवी हैं। आप विद्या शारदा सती है। अतएव आप स्वधाम जा रही हैं, तथापि श्रृङ्गेरी आदि क्षेत्रों में आप अपना सांनिध्य बनाये रखेंगे ॥ ३८ ॥

इष्टानर्थान् प्रदेहि त्वं शरणं समुपेयुषे ।
तथेति सा निजं धाम शारदा प्रत्यपद्यत ॥ ३९ ॥

शरणागतों को इष्टवर दिया करें। शारदा भी तथास्तु कह कर स्वधाम पधार गयीं ॥ ३९ ॥

संन्यासशास्त्रविधिना दीक्षयन् मण्डनं गुरुः ।
प्रणवं तत्त्वमस्यादिं प्रथमं समुपादिशत् ॥ ४० ॥

संन्यास दीक्षा देकर आचार्य ने मण्डन को प्रणवमन्त्र एवं तत्त्वमस्यादि महावाक्यों का उपदेश किया ॥ ४० ॥

ममेति भेदप्रथनान्न देहस्त्वं घटादिवत् ।
दृश्यं देहादिकं सर्वं द्रष्टा साक्षी ततः परः ॥ ४१ ॥

मेरा शरीर ऐसा सब बोलते हैं। जैसे मेरा घर। अतएव मैं शरीर नहीं, वह द्रष्टा है, साक्षी है, दृश्य से परे है ॥ ४१ ॥

इन्द्रियाणि मनश्चापि करणं ममतास्पदम् ।
सौष्ठवं दौष्ठवं चैषां तत्साक्षी पश्यतीतरः ॥ ४२ ॥

'मेरी आँख' 'मेरा मन' इस प्रकार इन्द्रियादि को भी मुझसे पृथक् ही समझते हैं। मेरी आँख अच्छी, खराब, मानो मैं पृथक् होकर इन सबको देख रहा हूँ ॥ ४२ ॥

अहं मां ननु जानामीत्यहंकारपरं वचः ।
अतोऽहंकारतोऽप्यन्यः सिद्ध्येत्सूक्ष्मसमीक्षणात् ॥ ४३ ॥

यद्यपि 'मेरा मैं' ऐसा कोई नहीं बोलता। तथापि मैं मुझे जानता हूँ ऐसा बोलते हैं। अत एव आत्मा अहंकार से भी भिन्न है। परन्तु सूक्ष्म बुद्धि से ही यह भेद मालूम पड़ता है ॥ ४३ ॥

देहेन्द्रियादिभिर्युक्तं त्वमर्थं प्राकृतो वदेत् ।
वाच्यार्थस्तु ततस्तादृक् लक्ष्यार्थस्तु ततः पृथक् ॥ ४४ ॥

प्राकृत मनुष्य देहेन्द्रियादि युक्त को त्वं पदार्थ मानता है, वह वाच्यार्थ है। लक्ष्यार्थ तो अलग है ॥ ४४ ॥

सदेव सोम्येत्यारभ्य सर्वहेतुतयोदितः ।
सर्वज्ञः सर्वशक्तश्च तत्पदार्थः श्रुतौ मतः ॥ ४५ ॥

सदेव सोम्येदमग्र आसीत् इत्यादि श्रुतिप्रतिपादित सर्वकारण सर्वशक्त श्रुति में तत्पदार्थ कहा है ॥ ४५ ॥

सर्वज्ञाल्पज्ञयोर्नैक्यं कथंचिदुपपद्यते ।
तस्मात्तत्त्वमसीत्यत्र बोधो लक्षणया भवेत् ॥ ४६ ॥

सर्वज्ञ और अल्पज्ञ की एकता नहीं हो सकती। अतः तत्त्वमसि में लक्षणा से ही बोध होगा ॥ ४६ ॥

सोऽयं पुमानितिवचः शुद्धमेकं हि लक्षयेत् ।
भागत्यागेन तद्वद्धि विद्धि तत्त्वमसीत्यपि ॥ ४७ ॥

'सोऽयं पुरुषः' यहाँ सः = तत्कालादिविशिष्ट अयं = एतत्कालादिविशिष्ट इन दोनों की एकता संभव न होने से भागत्याग से शुद्ध देवदत्त का बोध होता है। तत्त्वमसि में भी भागत्याग लक्षणा है ॥ ४७ ॥

तीरात्तीरं चरन्मत्स्यस्तीराद्यद्वत् प्रभिद्यते ।
जाग्रत्स्वप्नादिषु चरंस्त्वमन्यस्तनुतस्तथा ॥ ४८ ॥

एक किनारे से दूसरे किनारे मछली घूमती है। अतएव तीर से मछली भिन्न है। वैसे जाग्रत् शरीर से स्वप्नशरीर, फिर वहाँ से जाग्रत् शरीर से आने वाला आत्मा शरीर से भिन्न है ॥ ४८ ॥

नेदिष्ठं विदुषां यत्तद् दविष्ठं मूढ़चेतसाम् ।
अन्तर्बहिश्च संव्याप्यं मूढाश्चिन्वन्ति वै बहिः ॥ ४९ ॥

जीवात्मा की बात हुई। परमात्मा भी विद्वानों के लिये नजदीक है मूढ़ों के लिये दूर। मूढ उसे बाहर ढूँढ़ते हैं ॥ ४९ ॥

मुमुक्षया विरागेण गुरोः करुणयापि च ।
निर्मलः शक्तिसम्पन्नस्तत्त्वं पश्यति धीरधीः ॥ ५० ॥

मुमुक्षुता, वैराग्य एवं गुरुकृपा से निर्मल एवं शक्तिसम्पन्न होकर धीर पुरुष तत्त्व का दर्शन करते हैं ॥ ५० ॥

गुरुरीशो गुरुः कल्पवल्ली सर्वेष्टसाधिका ।
पालनीया तदीयाज्ञा नित्यं श्रेयोऽभिवाञ्छता ॥ ५१ ॥

गुरु ही परमात्मा है, कल्पवल्ली है, सर्वेष्टदायी है। श्रेय चाहने वालों को चाहिये कि उनकी आज्ञा का पालन करें ॥ ५१ ॥

शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ।
बध्नाति संसृतावीशो मोचयेच्च गुरुस्ततः ॥ ५२ ॥

शिव रुष्ट हो तो गुरु रास्ता निकाल देते हैं। परन्तु गुरु रुष्ट हो तो कौन रास्ता बतावे। ईश्वर जीव को संसार में फंसाता है, गुरु छुड़ाता है ॥५२॥

संसारो हारिणा दत्तो गुरुणा ज्ञानमेव च ।
आच्छादयेद्धरिः स्वं हि गुरुस्तं च प्रकाशयेत् ॥ ५३ ॥

हरि ने संसार दिया। गुरु ने ज्ञान। हरि अपने स्वरूप को ढकते हैं और गुरु उसको प्रकाशित करते हैं ॥ ५३ ॥

ततश्च मण्डनः शान्तो भक्त्या गुरुमपूजयत् ।
अदिशद्देशिकोऽस्याख्यां सुरेश्वर इतीश्वरः ॥ ५४ ॥

तदनन्तर मण्डन ने शान्त भक्ति भाव से गुरुपूजन किया। समर्थ आचार्य ने उनका नाम सुरेश्वर रखा ॥ ५४ ॥

ततः प्रस्थाय भगवान्भाष्यकृद्धर्मरक्षणः ।
श्रीशैलं समनुप्राप्तो यत्रास्ते मल्लिकार्जुनः ॥ ५५ ॥

वहाँ से आचार्य श्रीशैल की ओर प्रस्थान करते हैं जहाँ मल्लिकार्जुन भगवान् है (जो वौद्धों का गढ़ था) ॥ ५५ ॥

स्नात्वा तत्र च कृष्णायां वीक्ष्य चैव सदाशिवम् ।
भाष्याण्यध्यापयामास शिष्यवर्गांश्च भाष्यकृत् ॥ ५६ ॥

कृष्णा नदी में स्नान कर सदाशिव का दर्शन किया। फिर भाष्यकार ने वहीं शिष्यों को भाष्य पढ़ाया ॥ ५६ ॥

पूर्वशैलपरशैलवासिनां चैत्यसोपधिकदैत्यजन्मनाम् ।
अर्दयन् शिवममर्दयन्मतं शंकरोऽखिलशिवंकरो गुरुः ॥५७॥

पूर्वशैलीय तथा अपरशैलीयरूप में विभक्त चैत्यनामधारी दैत्यावतारों को जगत्कल्याणार्थ सर्वमंगलकारी शंकर ने (शास्त्रार्थ से) मर्दन किया ॥५७॥

शंकराचार्यचरिते जयमङ्गलगुम्फिते ।
सर्गो मण्डनसंन्याससंयुतो दशमो गतः ॥ १० ॥

—:०:—

## अथैकादशः सर्गः

अथैकदा समासीनमेकान्ते देशिकेश्वरम् ।
कोऽपि कापालिकोऽभ्यागाद् भैरवः साधुवेषभृत् ॥ १ ॥

एक समय की बात है। आचार्य एकान्त में बैठे हुए थे। साधुवेषधारी कोई भयानक कापालिक वहाँ पहुँचा ॥ १ ॥

चुडामणिं कुण्डलं च मालां गात्रेष्वलंकृतिम् ।
भस्म यज्ञोपवीतं चेत्येवं षाण्मुद्रिकाकृतिः ॥ २ ॥

उसने छः मुद्रायें धारण की थीं—चूड़ामणि, कुण्डल, माला, शरीर में अलंकार, भस्म और यज्ञोपवीत ॥ २ ॥

मस्तिष्कान्त्रवसापूर्णमांसाहुतिभिरर्चयन् ।
कपालस्मदिरापानपारणाभिश्च भैरवम् ॥ ३ ॥

भैरव की अर्चना वह मस्तिष्क, अन्त्र, मेद से पूर्ण मांसों की आहुतियों से तथा कपाल में मदिरपान रूपी पारणा से करता था ॥ ३ ॥

श्मशानवासी योगेन प्राप्तसिद्धिर्महाव्रतः ।
महाभैरवेष्टदेव आचार्यं नम्रवज्जगौ ॥ ४ ॥

वह श्मशान में रहता था। भारी व्रत रखता था। योग से कई सिद्धियों को भी उसने हासिल किया था। नम्रवत् उसने आचार्य से कहा ॥ ४ ॥

भवान् परोपकारैकविभूतिः करुणानिधिः ।
नैजं नैवार्थिनं जातु निवर्त्तयति निष्फलम् ॥ ५ ॥

आपकी विभूतियां परोपकारार्थ हैं, आप दयालु हैं। अपने पास आये अर्थी को कभी निष्फल नहीं लौटाते ॥ ५ ॥

अहं कापालिको नित्यं महाभैरवभर्चये ।
अनेनैव शरीरेण कैलासं गन्तुमिच्छुकः ॥ ६ ॥

मैं कापालिक हूँ । नित्य महाभैरव की अर्चना करता हूँ । इसी शरीर से कैलास जाना चाहता हूँ ॥ ६ ॥

तुष्टः कदाचिद् दुर्गेष्टः प्राहोपायं घृणानिधिः ।
जुहुयाः सार्वभौमस्य शीर्षं सर्वविदोऽथ वा ॥ ७ ॥

कदाचित् दुर्गापति हर ने तुष्ट होकर दया से उपाय यह बताया कि सार्वभौम राजा के या सर्वज्ञ के सिर को हवन करो ॥ ७ ॥

इत्युक्त्वान्तरधात्स्थाणुरहं तत्संग्रहे रतः ।
इतस्ततो भ्रमन्नेव नयामि समयं प्रभो ॥ ८ ॥

इतना कह कर भैरव तो अन्तर्धान हो गये । लेकिन मैं उसके संग्रह में इधर उधर भटकता हुआ समय बिता रहा हूँ ॥ ८ ॥

तत्राद्यं सार्वभौमस्य दुर्लभं भुवने शिरः ।
त्वं पुनः सकलज्ञश्च दयालुश्च न संशयः ॥ ९ ॥

इनमें सार्वभौम राजा का सिर तो दुर्लभ है । हाँ आप सर्वज्ञ भी हैं दयालु भी हैं ॥ ९ ॥

यद्यपि स्वेच्छया दद्याच्छिरः को वा निजं नरः ।
तथापि विश्वमिथ्यात्वं पश्यतस्तव न व्यथा ॥ १० ॥

यद्यपि स्वेच्छया अपना सिर कौन दे सकता है । तथापि विश्व को मिथ्या देखनेवाले आपको व्यथा नहीं हो सकती [ द्रष्टव्य—यहाँ सूचित होता है कि मुँह से विश्व को मिथ्या कहना कापालिक के लिये भी सरल है] ॥१०॥

निजास्थीनि महेन्द्राय दधीचिर्भगवानृषिः ।
प्रदाय चिरकालाय समियाय यशोऽव्ययम् ॥ ११ ॥

भगवान दधीचि ऋषि ने अपनी हड्डी इन्द्र को देकर अव्यय कीर्त्ति प्राप्त की [ द्र० पौराणिक कथा बोलना भी कापालिक जैसों के लिये कठिन नहीं है ] ॥ ११ ॥

जीमूतवाहनश्चैव काद्रवेयदयावशः ।
अर्पयामास कायं स्वमुद्धताय गरुत्मते ॥ १२ ॥

जीमूतवाहन ने भी सर्पों पर कृपा करते हुए अपना शरीर उद्धत गरुड को सौंपा ॥ १२ ॥

परार्थं स्ववपुः केचिद्धारयन्ति भवादृशाः ।
स्वार्थं परवपुः केचिदाददन्ते च मादृशाः ॥ १३ ॥

कोई तो परार्थ अपना शरीर देते हैं, जैसे आप हैं। और कोई स्वार्थ वश दूसरों का शरीर लेते हैं, जैसा मैं हूं ॥१३॥

क्षणिकं नश्वरं विश्वं पश्यतां हि विरागिणाम् ।
भवतां किमदेयं स्यादर्थयद्भ्यो महामते ॥ १४ ॥

समस्त विश्व को क्षणिक नश्वर देखने वाले विरागी आप के लिये अर्थियों को न देने योग्य क्या वस्तु हो सकती है ॥१४॥

इति श्रुत्वा वचस्तस्य स्मयमानमुखाम्बुजः ।
उवाच शृणु योगीन्द्र तथ्यमत्र यदस्ति तत् ॥ १५ ॥

सुन कर मुस्कुराते हुए आचार्य ने कहा—हे योगिराज तथ्य बात सुनिये ॥१५॥

प्रातः समाधिनिष्ठस्य सुखमाहर मे शिरः ।
न प्रकाशं यतः शक्यं जनानां पुरतस्त्वया ॥ १६ ॥

प्रातः जब मैं समधि में होऊँगा तब आराम से सिर ले जाओ। क्योंकि लोगों के सामने प्रकट रूप से यह संभव नहीं है ॥१६॥

शिष्यास्तन्नैव जानीयुर्न मर्षिष्यन्ति ते ध्रुवम् ।
मदेकशरणास्तुभ्यं मोक्तुमर्हन्ति ते कथम् ॥ १७ ॥

विशेषतया शिष्यवर्ग नहीं ही जानें, वे सहन नहीं करेंगे, एकमात्र मेरी शरण में रहने वाले वे आप के लिये मुझे कैसे छोड़ सकते हैं ॥१७॥

शूली त्रिपुण्ड्री कङ्कालमालाधारी सकुण्डलः ।
प्रातरन्येद्युरायातो मदघूर्णितलोचनः ॥ १८ ॥

दूसरे दिन प्रातः काल का समय था। शूल, त्रिपुण्ड्र और हड्डियों की माला पहने हुए वह, मदिरापानमद से जिसकी आंखें चढ़ रही थी, आचार्य के पास उपस्थित हो गया ॥१८॥

**आगतं तं विलोक्याग्रे कायं त्यक्तुमना मुनिः ।**
**आत्मन्यात्मानमावेश्य तस्थौ प्रीत्या समाहितः ।। १९ ।।**

भयंकराकार उस कापालिक को आये हुए देख कर अपना शरीर छोड़ने के लिये आचार्य आत्मा में आत्मा को निवेशित कर समाधिस्थ हो गये ।।१९।।

**सिद्धासनसमासीनं नासाग्रकृतलोचनम् ।**
**समकायशिरोग्रीवं महेश्वरमिवापरम् ।। २० ।।**
**विलोक्य देशिकं हृष्टो नष्टशङ्को नृशंसधीः ।**
**उद्यतासिर्महाघोरो हन्तुमैच्छत्कपालिकः ।। २१ ।।**

आचार्य सिद्धासनासीन थे । उनकी दृष्टि नासाग्र पर थी । शरीर ग्रीवा और सिर सीधे थे । साक्षात् दूसरे शंकर ही दीख रहे थे । उन्हें देखकर हर्ष के साथ निशंक भाव से वह नृशंस भयंकर कापालिक ने हाथ में तलवार उठाकर मारना चाहा ।।२०-२१।।

**तथाविधमलोकिष्ट दुष्टं कापालिकं हृदि ।**
**ध्यानमध्यगतो धीरः पद्मपादो महामुनिः ।। २२ ।।**

ध्यानस्थ पद्मपाद ने उसी अवस्था में कापालिक को ध्यानावस्था में हृदय में देखा ।।२२।।

**नृहरिं स च सस्मार स्मरतामार्त्तिहं प्रभुम् ।**
**आविर्बभूव हृदयात् स्तम्भादिव तदा हरिः ।। २३ ।।**

पद्मपाद ने उसी समय दुःखहारी नृसिंह भगवान का स्मरण किया । उसी समय जैसे स्तम्भ से पहले प्रकट हुए वैसे पद्मपाद के हृदय से नृसिंह भगवान प्रकट हुए । [ द्रष्टव्यः—यद्यपि माधवीय दिग्विजय में स्वयं पद्मपाद नृसिंह स्वरूप हो गये लिखा है । तथापि दूसरों के पूछने पर नृसिंह भगवान कैसे प्रसन्न हुए यह वृत्तान्त उसी अवस्था में पद्मपाद जी सुनाते हैं । स्वयं नृसिंह यह नहीं कह सकते । अतः हृदय से आविर्भाव ही युक्त होने से यहाँ वैसा लिखा गया ] ।।२३।।

**उग्रः सटाच्छटाऽऽस्फोटस्फोटिताभ्रपरिभ्रमः ।**
**अदभ्रवपुरुग्राक्षः कापालिकमरूरुधत् ।। २४ ।।**

नृसिंह भगवान् बड़े भयानक थे। जटा समुदाय के आघात से मेघों को तितर बितर कर रहे थे। विशालकाय थे। उनके नेत्र बड़े ही उग्र थे। कापालिक को सहसा उन्होंने रोक दिया ॥२४॥

निपात्य भुवि तं भीमो विददार नखाग्रतः।
क्षणमात्रेण तद्वक्षो ननर्द च मुहुर्मुहुः॥ २५ ॥

नृसिंह भगवान ने कापालिका को नीचे पटका और छाती फाड़ डाली। फिर जोर से गर्जन करने लगे ॥२५॥

श्रुत्वा तं भैरवं नादमाजग्मुः सकला जनाः।
वीक्ष्य वृत्तान्तमखिलमाश्चर्यान्वयिनोऽभवन् ॥ २६ ॥

उस भयंकर नाद को सुनकर सभी दौड़ आये और घटना देखकर आश्चर्यान्वित हो गये ॥२६॥

कथं प्रसादितः श्रीमान्नृसिंहो भगवानिति।
सविस्मयैः स्निग्धजनैः पृष्टः प्राह सनन्दनः॥ २७ ॥

आपने नरसिंह भगवान को कैसे प्रसन्न किया। ऐसा विस्मयपूर्वक स्नेहियों ने पूछा तो सनन्दन बोले ॥२९॥

पुरा बलाचले पुण्यमरण्यं किंचिदाश्रितः।
भक्तवश्यं नरहरिं ध्यायंश्चानेष्यहर्गणान् ॥ २८ ॥

मैंने पहले बलाचल में एक पवित्र जंगल में नरहरि भगवान का बहुत दिनों तक ध्यान किया ॥२८॥

किमर्थमत्र वससीत्येवं पृष्टश्च केनचित्।
किरातयूना प्रावोचं प्रत्युत्तरमहं वचः॥ २९ ॥

क्यों यहां वास करते हैं, ऐसा एक किरात के लड़के ने पुछा तो मैंने उत्तर दिया ॥२९॥

आकण्ठं मर्त्त्यमूर्त्तिर्यः कण्ठात्कण्ठीरवाङ्गयुक्।
तं मृगं मृगयेऽरण्ये न च पश्यामि कुत्रचित्॥ ३० ॥

गले तक मानव और ऊपर सिंह ऐसे मृग को मैं ढूंढ रहा हूँ लेकिन मिलता नहीं ॥३०॥

इतीरितः क्षणादेष प्रविश्य गहनं वनम् ।
निबध्य गाढं वल्लीभिरानयन्नृहरिं पुरः ॥ ३१ ॥

इतने कहते ही वह जंगल में जाकर क्षण में लताओं से बांधकर सामने नरहरि को लाया ॥३१॥

महर्षिभिरदृश्योऽपि वनेचरवशंगतः ।
कथं भवानिति मया हरिर्विज्ञापितोऽब्रवीत् ॥ ३२ ॥

बड़े बड़े महर्षि जिनका दर्शन नहीं कर पाते वे आप एक वन चर के वश में कैसे ? ऐसा मेरे पूछने पर नृसिंह बोले ॥३२॥

यथैकाग्रधियानेन ध्यातो नान्येन केनचित् ।
इत्युक्त्वा मयि कृत्वा च प्रसादं स तिरोदधौ ॥ ३३ ॥

जिस एकाग्रता से इसने मेरा ध्यान किया वैसा किसी ने नहीं किया, इतना कह कर मुझे आशीर्वाद देकर भगवान अन्तर्धान हो गये ॥३३॥

श्रुत्वा सनन्दनवचो जग्मुः प्रीतिमनुत्तमाम् ।
जगर्ज च महासिंहो दलयन्नखिलं जगत् ॥ ३४ ॥

सनन्दन का वचन सुनकर सभी प्रसन्न हुए। इधर नृसिंह भगवान जोर से गरजने लगे मानो कि जगत् का प्रलय ही होगा ॥३४॥

समाधिचलितस्तेन रवेण महता गुरुः ।
उन्मील्य नेत्रे पुरतोऽपश्यन्नरहरिं प्रभुः ॥ ३५ ॥

उस आवाज से आचार्य समाधि से चलित हुए । नेत्र खोलकर देखा तो सामने नरसिंह भगवान् दिखाई पड़े ॥१५॥

सहस्रसूर्यप्रतिमं चन्द्रिकाप्रस्फुलत्सटम् ।
वक्रेन्दुवक्रदंष्ट्रोग्रं ज्वालाजिह्वाभयंकरम् ॥ ३६ ॥
विनर्दन्तं पुरोऽकाण्डब्रह्माण्डप्रलयंकरम् ।
दृष्ट्वा नृहरिमैडिष्ट देशिको हर्षसंप्लुतः ॥ ३७ ॥

नरहरि भगवान् सहस्र सूर्य के समान तेजस्वी थे। चन्द्रिका के समान उनकी जटा थी। द्वितीया चन्द्रमा के समान दंष्ट्रायें थीं। ज्वाला के समान जिह्वा दीख रही थी। जोर से गरज रहे थे। अकस्मात् ही ब्रह्माण्ड का

प्रलय हो जाय ऐसी स्थिति हो रही थी। ऐसे नृसिंह भगवान् को देखकर हर्षयुक्त आचार्य ने स्तुति की ॥३६-३७॥

नृहरे हर कोपं स्वमहितो निहतो बली।
करुणां कुरु सर्वेश जगदेति भयं महत् ॥ ३८ ॥

हे नृहरे ! आप कोप का परित्याग करें। वलवान् शत्रु तो नष्ट हो ही गया। आप जगत् के ईश्वर हैं, करुणा करो। जगत् भय को प्राप्त हो रहे हैं ॥३८॥

सत्त्वमूर्त्ते जगन्मूर्त्ते जगदेकाश्रय प्रभो।
मा विश्वविलयं कार्षीः कथं हरगुणो हरौ ॥ ३९ ॥

आप सत्त्वगुण के मूर्ति हैं। जगत् आपका शरीर है। जगत् के आप एकाश्रय हैं। विश्वविलय न करें। रुद्र का गुण तमोगुण – संहारादि हरिमें कैसे ? ॥३९॥

मुक्तो भवति मुक्त्वा स्वं वपुस्त्वां संस्मरन्नरः।
भवता भैरवोऽप्येष हतो न स्यात्पुनर्भवी ॥ ४० ॥

आपका स्मरण कर जो नर अपना शरीर छोड़ता है वह अवश्य मुक्त होता है। इस भैरव कापालिक को आप ने मारा। इसे भी अव पुनर्जन्म न होगा। (क्योंकि मरते समय इसने आपका स्मरण क्या दर्शन ही किया) ॥४०॥

स्तम्भादाविर्भवन् भावं व्यापकं स्वमदर्शयः।
विश्वात्मतां पञ्चजनपञ्चाननतनुं दधत् ॥ ४१ ॥

स्तम्भ से आविर्भूत होकर आपने यह दिखाया था कि आप सर्वत्र व्यापक हैं। मनुष्य और पशु-नरसिंह रूप दिखाने का मतलब यही था कि आप ही सर्व-रूपधारी हैं ॥४१॥

हृद्यन्तःस्थोऽपि बाह्यस्थोऽस्युपाधिकलितात्मना।
असंवेद्योऽपि संवेद्योऽस्यस्तिभातिप्रियात्मना ॥ ४२ ॥

आप हृदय के अन्तःस्थित होने पर भी बाह्यस्थ भी हैं। उपाधिवशात् दोनों युक्त है। असंवेद्य होने पर भी समस्त जगत् में अस्ति भाति प्रिय रूप से संवेद्य हैं ॥४२॥

भव प्रशान्तो भगवन् रक्ष सर्वमिदं जगत् ।
अभयं यच्छ लोकेभ्यः शोकेभ्यस्तारयाखिलान् ।। ४३ ।।

हे भगवन् ! आप शान्त हों, समस्त जगत् की रक्षा करें, प्राणियों को अभय दें, सबको शोकमुक्त करें ।।४३।।

इति स्तुतो देशिकेन प्रशान्तो नरकेसरी ।
पद्मपादहृदम्भोजे पुनरन्तरधात् प्रभुः ।। ४४ ।।

इस प्रकार आचार्य की स्तुति से नृसिंह भगवान् प्रशान्त हुए और पद्मपाद के हृदय में अन्तर्धान हो गये ।।४४।।

गुरुणा न्यदर्शि निजनिर्ममता
गुरुदेवभक्तिरितरेण तथा ।
प्रशमं ययौ च सकलोऽपि जनः
प्रशशंस भूरि गुरुशिष्ययुगम् ।। ४४ ।।

गुरु ने शरीर प्रदान कर अपनी निर्मोहिता का दृष्टान्त सामने रखा । गुरु में और देव में भक्ति का शिष्य ने दृष्टान्त रखा । सभी लोग शान्त हो गए और गुरु शिष्य की प्रशंसा करने लगे ।।४५।।

शंकराचार्यचरिते जयमङ्गलगुम्फिते ।
सर्गश्चैकादशो यातः कापालिकवधान्वितः ।। ११ ।।



## अथ द्वादशः सर्गः

अथ तीर्थाटनव्याजाल्लोकानभ्युद्धरन् गुरुः ।
महाबलेश्वरक्षेत्रं गोकर्णमुपसेदिवान् ।। १ ।।

आचार्य तीर्थाटन के बहाने जगत् का उद्धार करने के लिये महाबलेश्वर क्षेत्र गोकर्ण पहुँचे ।।१।।

आराध्य तत्र गिरिशं सर्वाभीष्टफलप्रदम् ।
ययौ हरिहरक्षेत्रं वैकुण्ठरजताद्रिभम् ।। २ ।।

गोकर्ण में सर्वेष्टदायी शंकर की पूजा कर वहाँ से हरिहर क्षेत्र आये जो वैकुण्ठ और कैलास उभयरूप था ॥२॥

तुष्टाव पद्यैः श्लिष्टार्थैर्देशिको हरिशंकरौ ।
सर्वकामप्रदौ देवावेकीभूय व्यवस्थितौ ॥ ३ ॥

हरि और हर दोनों वहाँ एक होकर स्थित हैं। आचार्य ने श्लिष्टार्थक ( द्व्यर्थक ) पद्यों से दोनों की स्तुति की ॥३॥

मैनेन महसा युक्तं गामवन्तं च शाश्वतीम् ।
अब्धिजन्मकराश्लिष्टं वन्देऽहं परमेश्वरम् ॥ ४ ॥

हरिपक्ष में:—मैनेन = मीनावतारीय, तेज संयुक्त शाश्वतीं गां = पृथिवी देवी की अवतारादि से रक्षा करने वाले अब्धिजन्मा = लक्ष्मी के कर = हाथों से आश्लिष्ट = आलिङ्गित भयवान हरिको प्रणाम करता हूँ। हरपक्षमें:— मैनेन = मेना से उत्पन्न पार्वती रूपी तेज से युक्त शाश्वतीं गां = नित्यवाणी वेद की, रक्षा करने वाले अब्धिजन्म = चन्द्रमा के कर = किरणों से आश्लिष्ट व्याप्त भगवान शंकर को मैं प्रणाम करता हूं ॥४॥

सजयो रावणो भूत्वा यस्यानुग्रहलेशतः ।
वशीचकार भुवनं तं नमामि प्रभुं परम् ॥ ५ ॥

विष्णुपक्ष में सः = वह जय = जयनाम का पार्षद रावणो भूत्वा रावण बनकर ! शिवपक्ष में रावण सजयो = जयी विजयी भूत्वा = होकर। शेष समान। रावण जिसके अनुग्रह से भुवन को वश में किया उस प्रभु को मैं नमस्कार करता हूँ ॥५॥

नागसंवेष्टिततनुं नृत्यन्तं नटतां वरम् ।
उदञ्चितपदाम्भोजं प्रणमामि जगद्गुरुम् ॥ ६ ॥

विष्णुपक्ष में—कालियमर्दन के समय सर्प से वेष्टित शरीर नृत्य करते हुए पांव को उठाकर खड़े नटवर नागर जगद्गुरु भगवान को मैं प्रणाम करता हूँ। हर पक्ष में—भूषण के रूप में नाग संवेष्टित शरीर ताण्डव नृत्य करने वाले उद्गतपाद नटवर जगद्गुरु शंकर को प्रणाम करता हूं ॥६॥

यः क्वापि भिक्षुकः क्वापि पतिर्गोवाहनः प्रभुः ।
स्त्रीजनान्तेऽपि कन्दर्पदर्पहा तं नमाम्यहम् ॥ ७ ॥

विष्णुपक्ष में:—जो कहीं पर ( बलिमखादि में ) भिक्षुक और कहीं जगत्पति, कहीं गायों को जंगल ले जा कर चराने वाले तथा गोपियों के मध्य में ( रासादि प्रसंग में ) कामदेव के दर्प को नष्ट करने वाले हैं, उन प्रभु को मैं प्रणाम करता हूँ। शिव पक्ष में:—कभी खप्पर हाथ में लेकर भिक्षा ले रहे हैं और कहीं जगत्पति है। कहीं वृषभवाहन है। पार्वती के समीप में ही कामदेव को भस्म करने वाले प्रभु को मैं प्रणाम करता हूँ ॥७॥

**चन्द्रान्वयिनमीशानं देवं गिरिविलासिनम्।**
**विश्वनाथं जगन्नाथं वन्दे भक्तसुरद्रुमम् ॥ ८ ॥**

विष्णुपक्ष में—चन्द्रवंश में जन्म लेने वाले, गोवर्धन गिरिपर खेलने वाले विश्व के नाथ, पुरीक्षेत्र में जगन्नाथ, भक्तकल्पद्रुम भगवान की मैं वन्दना करता हूँ। शिवपक्ष में:—चन्द्र से अन्वयी = संयुक्त कैलासगिरि पर शोभायमान, जगत् के नाथ, काशीक्षेत्र में विश्वनाथ, भक्तकल्पद्रुम ईशान शंकर की मैं वन्दना करता हूँ ॥८॥

**ततो मूकाम्बिकास्थानं कोलापुरसमाह्वयम्।**
**प्रतस्थे देशिकः सार्धं शिष्यैः प्रणतमस्तकैः ॥ ९ ॥**

वहाँ से अचार्य ने शिष्यों के साथ कोल्लूरमूकाम्बिका क्षेत्र की ओर प्रस्थान किया ॥९॥

**तत्रैका सरणीमध्ये द्विजपत्नी महामतिः।**
**ननाम पदयोर्भक्त्या देशिकस्य महात्मनः ॥ १० ॥**

वहाँ मार्ग में एक मनस्विनी व्राह्मण पत्नी ने आचार्य के चरणों में भक्ति से प्रणाम किया ॥१०॥

**तामयूयुजदाशीर्भिः सपुत्रा सुभगा भव।**
**विधवा मृतवत्सा सा रुरोदाचार्यपादयोः ॥ ११ ॥**

आचार्य ने आशीर्वाद दिया तुम सपुत्रा सौभाग्यवती हो। किन्तु वह विधवा थी और उसका पुत्र मर चुका था अतः वह रोने लगी ॥११॥

**तद् दृष्ट्वा दयया युक्तोऽमज्जच्छोकाम्बुधौ बुधः।**
**अशरीरा तदा वाणी प्रवृत्ता शृण्वतां सताम् ॥ १२ ॥**

उसे देखकर दयालु आचार्य शोकमग्न हुए। तब सबके सुनते अशरीर वाणी हुई ॥१२॥

अशक्तस्य दया नाम दुःखायैवोपकल्पते ।
वचश्चैव भवेन्मिथ्या किं नु कष्टमतः परम् ॥ १३ ॥

अशक्त की दया दुःख का मूल है। और उसका वचन भी मिथ्या पड़ जाता है। इससे बढ़कर क्या कष्ट हो ॥१३॥

सत्यं जगत्त्रयीरक्षादीक्षस्यैव तव प्रभो ।
शोभतां करुणात्रेति देशिकोऽवददूर्ध्वदृक् ॥ १४ ॥

आचार्य ने ऊपर की ओर दृष्टि कर कहा:—हे प्रभो आपका वचन सत्य है। तीनों जगत् की रक्षा करने के लिए व्रतधारी आपकी ही करुणा की यहाँ शोभा है ॥१४॥

तदोन्मील्य स्वनयने सुप्तोत्थित इवार्भकः ।
उदतिष्ठद्यतः सर्वे परमं विस्मयं ययुः ॥ १४ ॥

सबको तब आश्चर्य हुआ जब वह मृत बालक आचार्य की प्रार्थना के साथ ही सोकर उठे के समान आँख खोलकर उठ खड़ा हुआ ॥१४॥

सिद्धिदं विबुधाराध्यं श्यामकाननमध्यगम् ।
मूकाम्बिकायाः सदनमध्यगादथ देशिकः ॥ १५ ॥

समस्त सिद्धिप्रद, विद्वत्सेवित, श्यामवनमध्यस्थ मूकाम्बिका क्षेत्र में वहाँ से आचार्य आये ॥१५॥

तत्र चाराधयामास जगदम्बां परात्पराम् ।
अस्तवीच्च जगत्सृष्टिस्थितिसंहारकारिणीम् ॥ १६ ॥

आचार्य ने वहाँ परात्परा जगदम्बा माता की आराधना की और सृष्टि-स्थिति लयकारिणी माता की इस प्रकार स्तुति की ॥१६॥

पारे परार्धं त्वत्पादकिरणाः स्वरुणादयः ।
षष्ठ्यूर्ध्वत्रिशतं रोचींष्याविश्यैते चकासति ॥ १७ ॥

हे मातः ! स्वरुणादि आपके चरणकिरण परार्ध से भी परे हैं। वे तीन सौ साठ मुख्य किरणों को प्राप्त होकर प्रकाशित होती हैं ॥१७॥

अष्टात्रिंशत्कलास्तासु पञ्च प्राहुर्निवृत्तिदाः ।
या बोधिनी धारिणी च क्षमा चाप्यमृतापि च ॥ १८ ॥

मानदेति च विख्याता निवृत्तिपरमाः कलाः ।
तासामुपरि पादाब्जं द्योतमानं भजामहे ।। १९ ।।

अड़तीस कलायें हैं। उनमें पांच निवृत्तिदायी हैं। बोधिनी, धारिणी, क्षमा अमृता और मानदा ये निवृत्तिपर हैं। इनके ऊपर विराजमान आपके चरण कमल का हम भजन करते हैं।।१८-१९।।

मूलाधारे रक्तवर्णे पृथ्वीतत्त्वं वसंदले ।
स्वाधिष्ठाने च सिन्दूरे चाग्नितत्त्वं बलंदले ।। २० ।।
मणिपूरे नीलवर्णे जलतत्त्व डफंदले ।
अनाहते चारुणाभे वायुतत्त्वं कठंदलें ।। २१ ।।
विशुद्धौ च नभस्तत्वं धूम्रे अंअःदले स्थितम् ।
आज्ञायां च महत्तत्वं श्वेते हंक्षंदलेऽम्बुजे ।। २२ ।।
मूर्ध्नि स्याच्छिवतत्त्वं च सहस्रदलपङ्कजे ।
एवं तत्त्वात्मिकां देवीं त्रिपुरां भावये हृदि ।। २३ ।।

मूलाधार में रक्तवर्ण चतुर्दल कमल है। व से स तक—'वंशंषंसं' ये वर्णात्मक दल हैं, उसमें पृथिवीतत्त्व के रूप में पराम्बा रहती है। स्वाधिष्ठान में सिन्दूरवर्ण बं इत्यादि लं पर्यन्तवर्णयुक्त षड्दलकमल में अग्नितत्त्व रूप से, मणिपूर में नीलवर्ण डं ढं—फं दलवाले कमल में जलतत्त्वरूप से, अनाहत में अरुण वर्ण कं—ठं दलवाले कमल में वायु तत्त्व के रूप में, धूम्रवर्ण अं—अः दलवाले कमलमें आकाशतत्त्व के रूप से, आज्ञा में श्वेतवर्ण हंक्षं दलवाले कमल में महत्तत्त्व के रूप से और मूर्धा में सहस्रार कमल में शिवतत्त्व के रूप से विराजमान त्रिपुरा देवी का हम हृदय में ध्यान करते हैं [द्रष्टव्यः—योगसिद्धान्त में स्वाधिष्ठान में जलतत्त्व और मणिपूर में अग्नितत्त्व है] ।। २०-२३ ।।

आधारे भोगकामाश्च स्वाधिष्ठाने ततः परे ।
मणिपूरे बहिःस्थाश्च त्वामम्ब समुपासते ।। २४ ।।

मूलाधार में भोग की कामनावाले, जो उनसे ऊपर उठे हैं वे स्वाधिष्ठान में और मणिपूर में आपके धाम के बाहर तक पहुँचे हुए लोग आपकी उपासना करते हैं ।।२४।।

त्वत्पुरान्तर्गतास्ते ये भजन्ति त्वामनाहते ।
विशुद्धौ तव सामीप्यमाज्ञाचक्रे सरूपताम् ॥ २५ ॥

अनाहत में उपासना करने वाले आपके धाम के अंदर पहुँच चुके होते हैं। विशुद्धि में सामीप्य तथा आज्ञा चक्र में सारूप्य प्राप्त हुए होते हैं ॥२५॥

सहस्रपत्रकमले त्वां भजन्तो महाधियः ।
चतुर्विधैक्यानुभवात्सायुज्यं यान्ति तत्पराः ॥ २६ ॥

सहस्र पत्र कमल में उपासना करने वाले धीमान् चार प्रकार की एकता का अनुभव करते हुए सायुज्य को प्राप्त होते हैं ॥२६॥

ऐक्यं श्रीचक्रषट्चक्रद्वयस्याद्यं परस्परम् ।
श्रीचक्रमन्त्रयोः पश्चात्त्वया च ध्यायते बुधैः ॥ २७ ॥

प्रथम श्रीचक्र और षट्चक्र की एकता का फिर श्रीचक्र और मन्त्र की बाद में आपके साथ सबकी एकता का ध्यान आगमज्ञ करते हैं ॥ [द्रष्टव्यः— आगमशास्त्रीय विधान अत्यन्त विस्तारपूर्वक है। यहाँ यह लेशमात्र कहा गया है] ।

उषित्वा तत्र चाचार्यः किंचित्कालमुदारधीः ।
ततो जगाम च ग्रामं श्रीबलीत्यभिधं गुरुः ॥ २८ ॥

उदारमति आचार्य कुछ काल कोलापुर मूकाम्बिका क्षेत्र में निवास कर वहाँ से श्रीवलि ग्राम की ओर चले ॥२८॥

तत्र प्रभाकरो नाम द्विजेन्द्रः सर्वशास्त्रवित् ।
प्रवृत्तिशास्त्रनिरतो धनधान्यसमन्वितः ॥ २९ ॥

वहाँ प्रभाकर नाम का एक विप्र था। जो सर्वशास्त्र वेत्ता, कर्मठ एवं धनधान्यसंपन्न था ॥२९॥

तत्पुत्रः शान्तगम्भीरः क्षमायुक् स्मरसुन्दरः ।
न चेष्टते न हसति जडवन्नाभिभाषते ॥ ३० ॥

प्रभाकर का पुत्र बड़ा शान्त, गंभीर, क्षमाशील एवं सुन्दर था। किन्तु जड़ के समान चेष्टारहित था, न हँसता था, न बोलता था ॥३०॥

तच्चिन्तया पितुस्तस्य प्रीणन्ति न गृहादयः ।
स शुश्राव समायातं देशिकं शिष्यसंवृतम् ॥ ३१ ॥

पुत्र की चिन्ता से प्रभाकर को गृहादि अच्छे नहीं लगते थे। उन्होंने शिष्य सहित आचार्य का आगमन सुना ॥३१॥

**रिक्तहस्तो हि नोपेयाद् गुरुं राजानमेव च।**
**इति सोपायनो गत्वा प्राणमत्ससुतो द्विजः ॥ ३२ ॥**

रिक्त हस्त होकर राजा और गुरु के पास न जाना चाहिये। इसलिए भेंट साथ में लेकर पुत्रसहित प्रभाकर आचार्य के पास पहुँचे [ रिक्त हस्त होकर नहीं जाना चाहिये इसका कारण एक यह है कि साधारण गुरु लोग शिष्यों की भेंट पर जीते हैं अतः शिष्य के आते ही पहले यही देखते हैं कि यह कुछ लाया है या नहीं। और राजा लोभी होते हैं, परधनजीवी होते हैं, अतः वे भी कोई पास में आ जाय तो यही देखते हैं कि कुछ लाया है या नहीं॥ क्या इस स्मृति का द्वितीय अंश आज कल की लाज रिश्वत की अवैधता के लिये चुनौती नहीं ? रिश्वत के रूप में नहीं सही किन्तु भेंट के रूप में सरकारी आदमियों को कुछ देना चाहिये यह अर्थ इस स्मृति से नहीं निकलता ? उत्तर यही है कि गुरु भगवतरूप और राजा देवांश माने जाते थे। अतः उक्त विधान है ] ॥ ३२ ॥

**पित्रा स नमितो बालो देशिकाङ्घ्रिसरोजयोः।**
**नोत्तस्थौ प्रकटं स्वीयं जाड्यं संदर्शयन्निव ॥ ३३ ॥**

प्रभाकर ने पुत्र को आचार्य चरण में नमस्कार कराया तो सिर लगा कर पांवों में पड़ा ही रह गया। उठा ही नहीं। मानो कि अपनी जड़ता को प्रकट ही उसने दिखाया ॥३३॥

**देशिकेन शनैस्तस्मिन् करेणोत्थापिते शिशौ।**
**उवाच तत्पिता कस्माज्जाड्यमस्य वद प्रभो ॥ ३४ ॥**

आचार्य ने अपने हाथ से उसे धीरे से उठाया तो प्रभाकर ने पूछा कि हे प्रभो ! इसकी ऐसी जड़ता क्यों है ॥३४॥

**त्रयोदशाब्दो बालोऽयं नाध्यैष्ट न च खेलति।**
**शठैर्बालैस्ताड्यमानो नैति रोषं न रोदिति ॥ ३५ ॥**

तेरह साल का यह लड़का है। न तो इसका मन अध्ययन में है और न खेल में। शरारती लड़के इसे पीटते हैं तो भी यह न तो रुष्ट होता है और न रोता ही है ॥३५॥

**भुङ्क्ते जातु न भुङ्क्ते च प्रसन्नो वर्त्ततेऽनिशम् ।**
**इति द्विजेन गदित आचार्यो बालमब्रवीत् ।। ३६ ।।**

कभी यह भोजन करता है और कभी नहीं भी करता है। हमेशा प्रसन्न रहता है। ऐसा कहने पर आचार्य ने उससे पूछा ।।३६।।

**कस्त्वं कस्य कुतो गन्ता किं नाम कुत आगतः ।**
**कथं च जडवल्लोके वर्तसे ब्रूहि मेऽखिलम् ।। ३७ ।।**

तुम कौन हो ? किसके हो ? कहाँ जाना है ? आये कहाँ से ? क्यों जड़ के समान रहते हो। यह सब मुझे बताओ ।।३७।।

**ब्रह्मक्षत्रियविट्शूद्रा नाहं मर्त्यो न देवता ।**
**वर्णी गृही वनी न्यासी नाहं सोऽहं शिवः स्वयम् ।। ३८ ।।**

बालक ने कहा—मैं ब्राह्मण, क्षत्रिय, वैश्य या शूद्र नहीं। मैं मर्त्य या देवता नहीं। मैं ब्रह्मचारी गृहस्थ वानप्रस्थ या संन्यासी नहीं। मैं वही हूँ, शिव हूँ ।।३८।।

**नाहं जडो जडः सर्वः सांनिध्यान्मम जीवति ।**
**शोकमोहक्षुधोदन्याजरामृत्युविवर्जितः ।। ३९ ।।**

मैं जड़ नहीं किन्तु जड़पदार्थ सभी मेरे संनिध्य से जी रहे हैं। शोक, मोह, क्षुधा, पिपासा, जरा और मृत्यु इन छः विकारों से मैं रहित हूँ ।।३९।।

**दर्पणेन मुखाभासश्चिदाभासस्तथा धिया ।**
**उपाधिविगमेऽभिन्नं मुखं चिद्वावशिष्यते ।। ४० ।।**

दर्पण से मुखाभास उत्पन्न होता है। वैसे बुद्धि से चिदाभास उत्पन्न होता है। उपाधि के निकलने पर जैसे केवल मुख अवशिष्ट रहता है वैसे चित् अवशिष्ट रहता है ।।४०।।

**वागादेरपि वागादिरेको नानावभासते ।**
**शरावाद्युदके भानुरेक एव ह्यनेकवत् ।। ४१ ।।**

वह आत्मा वागादि का भी वागादि है। एक होने पर भी नाना दीखता है। जैसे घट कुल्लडादि जल में एक सूर्य अनेक सा दीखता है ।।४१।।

**घनच्छन्नदृगर्कं हि घनच्छन्नं विलोकते ।**
**तथा बद्धवदाभाति मूढस्यात्मा न तद्विदः ।। ४२ ।।**

दृष्टि मेघ से आवृत होती है तो लोग समझते हैं सूर्य ही मेघ से आवृत हो गया। वैसे ही अन्तःकरण बद्ध होता है। मूढ़ आत्मा को बद्ध मानता है। ज्ञानी नहीं ॥४२॥

इत्युक्त्वोपरते तस्मिञ्जगाद यतिभूपतिः ।
नात्र वस्तुं जडो योग्यो जडस्यानुपयोगतः ॥ ४३ ॥

इतना कह कर बालक उपरत हुआ (प्रभाकर अतिशयित आश्चर्य में पड़ा हुआ था) आचार्य ने कहा यह जड़ यहाँ रहने योग्य नहीं है। जड़ का क्या उपयोग है ॥४३॥

पूर्वाभ्यासवशात्सम्यग् ज्ञाततत्त्वः परार्थवित् ।
देहादिमपि नात्मीयं नात्मानं वैष पश्यति ॥ ४४ ॥

(जड़ का अर्थ या निशा सर्वभूतानां के अनुसार संसार के विषय में जड़ है। और वस्तुतः) यह पूर्वाभ्यास के कारण तत्त्व के ज्ञाता हैं, परमार्थवेत्ता हैं। यह शरीरादि को भी न तो अपना समझता है, न आत्मा ही समझता है ॥४४॥

हस्तामलकवत्तत्त्वं यत एष प्रपश्यति ।
हस्तामलक एवायं नाम्ना चास्तु महायशाः ॥ ४५ ॥

हाथ में रखे आँवले के समान यह परमार्थतत्त्व को देखता है। अतएव इसका नाम हस्तामलक ही हो ॥४५॥

तं चादाय गुरुर्बालं साश्चर्यं द्विजवन्दितः ।
तुङ्गभद्रापगातीरशोभं शृङ्गगिरिं ययौ ॥ ४६ ॥

प्रभाकर आश्चर्यान्वित होकर आचार्य के चरणों में नतमस्तक थे। उस बालक को लेकर आचार्य वहाँ से तुङ्गभद्रातीरशोभी शृङ्गेरी की ओर चले ॥४६॥

अध्यापयंश्चिरं तत्र भाष्यादीन्देशिकाग्रणीः ।
प्रासादं शारदाम्बाया देवताया अकल्पयत् ॥ ४७ ॥

शृंगेरी में रहते हुए आचार्य ने शिष्यों को भाष्यादि पढ़ाया। और वहाँ शारदाम्बा का एक देवालय भी बनवाया ॥४७॥

कश्चिद्विनेयः सेवैकनिरतस्तनुवागभूत् ।
शिष्यो देशिकवर्यस्य तोटकं यं प्रचक्षते ॥ ४८ ॥

आचार्य का एक विनयग्राही सेवानिरत अल्पभाषी शिष्य था जिसको तोटक कहते थे ॥४८॥

**देशिकायासनं नित्यं तनोत्युच्चैर्मृदु स्थितौ ।**
**वस्त्राणि मार्ष्टि च्छायेव नित्यं समनुवर्त्तते ॥ ४९ ॥**

नित्य ही आचार्य के लिये बैठने का मुलायम आसनादि बिछावे। वस्त्र धोवे और छाया के समान अनुवर्त्तन करे ॥४९॥

**न जृम्भते गुरोः पार्श्वे न प्रसारयते पदौ ।**
**बहु नो भाषते, नाग्रे पृष्ठदर्शी च तिष्ठति ॥ ५० ॥**

गुरु के पास कभी जंभाई नहीं लेते, पाँव नहीं फैलाते, बहुत बोलते नहीं और आगे पीठ दिखाकर खड़े नहीं होते ॥५०॥

**शाटीप्रक्षालने यातं वीक्ष्य नायातमेव च ।**
**विललम्बेऽध्यापनाय तिष्ठत्स्वन्येषु देशिकः ॥ ५१ ॥**

वस्त्र धोने के लिये गये हैं लेकिन लौटे नहीं देखकर अध्यापन प्रारम्भ करने के लिये तोटक की प्रतीक्षा में आचार्य विलम्ब करने लगे ॥५१॥

**शान्तिपाठाय शिष्येषु प्रोद्यतेषु सुबुद्धिषु ।**
**स्थीयतां गिरिरायात्वित्येवं संन्यरुणद् गुरुः ॥ ५२ ॥**

बुद्धिमान अन्य शिष्यों ने शान्तिपाठ करने के लिये उद्यत हुए तो आचार्य ने कहा—ठहरो गिरि को आने दो ॥५२॥

**मन्दो ह्यनधिकार्येष इति संसूचयंस्तदा ।**
**पद्मपादोऽप्रतीक्षायै ददृशे भित्तिमिङ्गयन् ॥ ५३ ॥**

तोटक मन्द बुद्धि है, अनधिकारी है, भित्ति के समान जड़ है, यह सूचित करते हुय पद्मपाद भित्ति की ओर इशारा करने लगे ॥५३॥

**तस्य गर्वं निराकर्त्तुं करुणापूर्णमानसः ।**
**दिदेश गिरये विद्याः सद्यः शक्त्या हि देशिकः ॥ ५४ ॥**

पद्मपाद के अभिमान को दूर करने के लिए आचार्य ने अपनी शक्ति से गिरि (तोटक) को समस्त विद्यायें दीं ॥५४॥

**ब्रुवंस्तोटकवृत्तेन विद्यां प्रकटयन् पराम् ।**
**आससाद गिरिस्तत्र कृतवस्त्रप्रमार्जनः ॥ ५५ ॥**

परा विद्या को प्रकट करने वाले तोटकवृत्त से बोलते हुए गिरि वस्त्र धोकर वहां पहुँच गये ॥५५॥

**तस्याकर्ण्य च वाग्गुम्फं श्रुत्यन्तार्थनिगुम्फितम् ।**
**स्मयं त्यक्त्वा विस्मयं ते ययुः पद्मपादादयः ॥ ५६ ॥**

वेदान्तार्थपूर्ण तोटक वचन सुनकर पद्मपादादि के मन में स्मय (अभिमान) के बदले विस्मय होने लगा ॥५६॥

**भक्त्युत्कर्षात् प्रादुरासंस्तोटकच्छन्दसा गिरेः ।**
**पद्यानि तोटकाचार्यं ततः शिष्टास्तमूचिरे ॥ ५७ ॥**

भक्ति के उत्कर्ष के कारण तोटक छन्द से पद्य निकले। इस लिये शिष्टों ने उनको तोटकाचार्य कहना शुरू किया ॥५७॥

**पुमर्था इव धर्माद्या वेदा इव ऋगादयः ।**
**मुखानीव विधेरासंश्चत्वारस्तोटकादयः ॥ ५८ ॥**

धर्मादि पुरुषार्थ के समान ऋगादि वेदों के समान और ब्रह्मा के मुख के समान तोटकादि चार शिष्य हुए ॥५८॥

**आस्यैश्चतुर्भिरभवच्चतुरो विधाता**
**दोर्भिश्चतुर्भिरशुभत्पुरुषोत्तमश्च ।**
**वीक्ष्यैतयोरचतुरं विदधे चतुर्भिः**
**शिष्यैर्निजं सुचतुरं ननु शंकरश्च ॥ ५९ ॥**

चार मुखों से ब्रह्मा बड़े ही चतुर हो गये। चार भुजाओं से पुरुषोत्तम विष्णु भी दैत्यवधादिचतुर हो गये। इन दोनों के सामने शङ्कर अचतुर थे। (चार से रहित चातुर्य से रहित) तब उन्होंने चार शिष्यों को बनाया और सुचतुर हो गये (सुचतुर = उत्तम चार शिष्य वाले और उत्तम चातुर्य वाले) ॥५९॥

**शंकराचार्यचरिते जयमङ्गलगुम्फिते ।**
**द्वादशो वर्णितौ यत्र हस्तामलकतोटकौ ॥ १२ ॥**



# अथ त्रयोदशः सर्गः

कदाचित्प्रणिपत्याह गुरुं भक्त्या सुरेश्वरः ।
भाष्ये शारीरके कांचिद् वृत्तिं कर्त्तुमना मुनिः ॥ १ ॥

एक समय सुरेश्वर आचार्यचरणों में प्रणाम कर शारीरक भाष्य पर वृत्ति लिखने की इच्छा से बोलेः—॥१॥

ममास्ति करणीयं यद् भट्टपादसमिङ्गितम् ।
आदेष्टुमर्हति विभो तन्मां चरणसेवकम् ॥ २ ॥

मेरा वह कर्त्तव्य जिसे भट्टपाद ने इंगित किया, बतायें, मैं चरण सेवा में उपस्थित हूँ ॥२॥

इत्युक्तः सुप्रसन्नात्मा देशिकस्तमवोचत ।
भाष्ये निबन्धः कर्त्तव्यो भवता वार्त्तिकाभिधः ॥ ३ ॥

प्रसन्न होकर आचार्य बोले कि भाष्य पर वार्त्तिक नाम का निबन्ध लिखो ॥३॥

भवत्कृपाकटाक्षेण कर्त्तुमर्हाम्यहं प्रभो ।
नान्यथा मेऽस्ति सामर्थ्यं भाष्ये कर्त्तुं निबन्धनम् ॥ ४ ॥

आप की कृपा दृष्टि से ही मैं वार्त्तिक बना सकूँगा। अन्यथा मुझ में इतना सामर्थ्य कहाँ है ? ॥४॥

तथास्त्वित्युदितो नत्वा गुरुं देवेश्वरो ययौ ।
चित्सुखाद्यास्तदा प्रोचुः पद्मपादप्रियं गुरुम् ॥ ५ ॥

आचार्य ने तथास्तु कहा। सुरेश्वर आचार्य को प्रणाम कर चले गये। उस समय चित्सुखादि जो पद्मपाद के प्रिय थे आचार्य से बोलने लगे ॥५॥

अनर्थोऽत्र महान् भावी व्यासोक्तमपि कर्मठः ।
प्रलयं मन्यते नासौ नेश्वरं च सुरेश्वरः ॥ ६ ॥

वहुत बड़ा अनर्थ होगा। यह कर्मठ है। व्यासोक्त प्रलय को भी यह मानता नहीं और ईश्वर को भी नहीं मानता ॥६॥

अयं कर्मपरं सूत्रं सभाष्यं योजयिष्यते ।
संन्यासं स्वेच्छया नैष व्यधात् किन्तु जितोऽवशः ।। ७ ।।

ये सुरेश्वर सभाष्य सूत्र को कर्मपरक लगायेंगे। इन्होंने संन्यास भी स्वेच्छया थोड़ा ही लिया। पराजित होने से परवश होकर लिया है ।।७।।

पद्मपादो जितात्मायं गुरुभक्तः सनन्दनः ।
पदे पदेऽम्बुजं गङ्गा यमायान्तमनुव्यधात् ।। ८ ।।

ये पद्मपाद जितात्मा गुरुभक्त है गङ्गाजी ने आते हुए जिसके पांव के नीचे कमल बनाया था ।।८।।

स एव भगवन् युष्मद्भाष्येऽगाधे दुरासदे ।
वृत्तिं करोतु परमश्रद्धालुर्विदिताशयः ।। ९ ।।

हे भगवन् ! आपके गम्भीर भाष्य में वे ही व्याख्या लिखें। वे परम श्रद्धालु हैं। आशय को बराबर जानते भी हैं ।।९।।

यद्वानन्दगिरिः कुर्यात्तपस्तोषितभारती ।
वृत्तिं भवत्प्रबन्धेषु भवदाशयबोधिनीम् ।। १० ।।

अथवा ये आनन्दगिरिजी आपके ग्रन्थों में आपके आशय को बतलाने वाली वृत्ति लिखें। इन्होंने भी तप से सरस्वती को प्रसन्न किया ।।१०।।

इत्थ वदत्सु तच्छृण्वंस्तत्रागच्छत्सनन्दनः ।
स प्रणम्य गुरुं प्रास्तौद् हस्तामलकमिङ्गयन् ।। ११ ।।

इस प्रकार चित्सुखादि बोल ही रहे थे कि वहां स्वयं पद्मपाद पहुँच गये। उन्होंने गुरु को प्रणाम किया। फिर हस्तामलक की ओर इशारा कर यह प्रस्ताव रखा ।।११।।

अयं योग्यो भवद्भाष्ये विधातुं वार्त्तिकं गुरो ।
यस्तु हस्तामलकवद् बुद्धः सिद्धान्तमीक्षते ।। १२ ।।

हे गुरो ये आपके भाष्य में वार्त्तिक बनाने में योग्य हैं। बड़े प्रबुद्ध हैं। सिद्धान्तों को जो हस्तामलकवत् देखते हैं ।।१२।।

हस्तामलकमालक्ष्य व्यादिशद्देशिकस्तदा ।
सनन्दनादिकान् शिष्यान् सामिस्मितशुभाननः ।। १३ ।।

उस समय कुछ मुस्कुराते हुए आचार्य ने हस्तामलक को लक्ष्य कर सनन्दनादि शिष्यों को कहा ॥१३॥

**अन्यादृगस्य नैपुण्यमन्तःप्रवणचेतसः ।**
**न पपाठ न चिक्रीड बाल्येऽयं परमार्थवित् ॥ १४ ॥**

हस्तामलक नित्य अन्तर्मुख रहता है इसकी निपुणता और तरह की है। इसने वचपन में न अध्ययन किया और न खेला। यह परमार्थ वेत्ता हैं ॥१४॥

**ते पप्रच्छुः कथं नाम विनैव श्रवणादिकम् ।**
**बाल्ये ज्ञानमलब्धासौ तन्निशम्याह देशिकः ॥ १५ ॥**

शिष्यों ने पूछा—विना श्रवणादि किये वाल्य में इसको ज्ञान कैसे प्राप्त हुआ ? आचार्य ने कहाः—॥१५॥

**पुरासीद्यमुनातीरे साधुवृत्तो विरक्तधीः ।**
**सिद्धः कोऽपि स्वनासाग्रकृताक्षः स्थिरमानसः ॥ १६ ॥**

कुछ वर्ष पहले यमुना किनारे एक महात्मा विरक्त योगसिद्ध थे। नासिकाग्र पर दृष्टि कर वे समाधि में बैठे हुए थे ॥१६॥

**तीर्थयात्रागता विप्रबाला स्नातुं सखीयुता ।**
**द्विहायनं निजं सूनुं तदग्रे न्यस्य संजगौ ॥ १७ ॥**

तीर्थयात्रा में आई हुई कोई ब्राह्मणी सहेली के साथ उनके पास आकर अपने दो वर्ष के बच्चे को उनके सामने रखकर बोली :—॥१७॥

**निरीक्षस्व क्षणं बालं यावत्स्नास्यामि संयमिन् ।**
**इत्युक्त्वा सा गता नैनं सा विवेद समाहितम् ॥ १८ ॥**

महात्माजी ! थोड़ी देर इस बच्चे का ख्याल रखना, हम स्नान करने जा रही हैं। इतना कह कर वह गई। परन्तु उस को यह मालूम न था कि ये समाधि में बैठे हुए हैं ॥१८॥

**तस्यां गतायां बालोऽपि खेलन्दैववशादसौ ।**
**नद्यां पपात तन्माता यावत्प्रत्यावृतन्मृतः ॥ १९ ॥**

उसके जाने पर बालक खेलता हुआ दैवयोग से नदी में गिरा और जब तक माँ लौटी तब तक मर भी गया ॥१९॥

शिशुं वीक्ष्य मृतं शोकाच्चुक्रुशुस्ता मुनेः पुरः ।
खिन्नो मुनिर्योगभूम्ना प्राविक्षच्च शिशोस्तनुम् ।। २० ।।

शिशु को मरे हुए देखकर वे नारियां जोर से रोने लगीं । योगी की समाधि टूटी । योगमहिमा से सारी बातें जानी और कुछ खिन्न हुए । फिर योगशक्ति से ही वालक के शरीर में स्वयं प्रविष्ट हुए ।।२०।।

स एवायं महातेजा हस्तामलकसंज्ञितः ।
सर्वं शास्त्रं श्रुतिं चैव वेत्त्यध्ययनमन्तरा ।। २१ ।।

वही यह महातेजस्वी हस्तामलक है । ये सब शास्त्रों को और श्रुतियों को विना अध्ययन ही जानते हैं । [ द्रष्टव्यः—यहाँ माधवीय शंकरदिग्विजय से ऐसी झलक मिलती है कि वह ब्राह्मणी यमुनातीर में ही किसी गाँव की रहनेवाली थी । परंतु मूकाम्बिकाक्षेत्र से आगे एक गांव में बालक का अस्तित्व पहले बताया गया । तदनुसार यहाँ तीर्थयात्रार्थ उनके माता पिता आये होंगे यही संगति वैठ सकती है ] ।।२१।।

बहिःप्रवृत्तिशून्यत्वान्नियोगं नायमर्हति ।
वृत्तिं विधातुमर्होऽयं बुद्धतत्त्वः सुरेश्वरः ।। २२ ।।

हस्तामलक की बाह्य प्रवृत्ति नही रहती । अतः इनको कुछ आज्ञा देना ठीक नहीं हैं । इधर सुरेश्वर प्रवुद्ध है । वृत्ति लिखने योग्य है ।।२२।।

तथापि नाधुना तेन कारयिष्यामि वार्त्तिकम् ।
प्रतीपा बहवो जाता उग्रा बहुविरोधिता ।। २३ ।।

फिर भी अव सुरेश्वर से वार्तिक नहीं कराऊँगा । क्योंकि विरोधी बहुत हो गये हैं । वहुविरोध बुरा होता है ।।२३।।

भाष्ये निबन्धमेकं तु विदधातु सनन्दनः ।
न वार्त्तिकं तद्धि परप्रतिज्ञातं यतोऽभवत् ।। २४ ।।

भाष्य के ऊपर सनन्दन एक निवन्ध लिखें । किन्तु वार्त्तिक नहीं । क्योंकि वार्त्तिक परप्रतिज्ञात हो गया है ।।२४।।

अथैकान्ते समाहूय प्राहाचार्यः सुरेश्वरम् ।
मा कार्षीर्वार्त्तिकं भाष्ये न सहन्त इमेऽधियः ।। २५ ।।

इसके बाद आचार्य ने सुरेश्वर को एकान्त में बुलाकर कहा कि सूत्र-भाष्य पर वार्त्तिक न लिखो। ये विचारहीन लोग सहन नहीं करते हैं ॥२५॥

**अपि चाहुर्गृही सोऽयं पूर्वं स गृहवासनाम् ।**
**कथं नाम त्यजेन्नास्य मते संन्यास एव च ॥ २६ ॥**

और ऐसा भी कहते हैं कि यह पहले गृहस्थ रहा है। वह कैसे गृहस्थ-वासना को छोड़ सकता है। इसके मत में संन्यास है भी नहीं ॥२६॥

**वारिता द्वारि स द्वाःस्थैर्भिक्षवो न तु पूजिताः ।**
**विजितश्चावशो न्यासं बहिरूरीचकार सः ॥ २७ ॥**

इसके द्वार पर आये भिक्षुओं को द्वारपालों के द्वारा हटाया और पूजा नहीं की। पराजित होने से पराधीनता से इसने बाहर-बाहर संन्यास स्वीकार किया है ॥२७॥

**तस्मात् स्वतन्त्रमेवैकं निबन्धं बन्धुरं कुरु ।**
**अध्यात्मनिष्ठं येनैषां प्रत्ययः स्यात्प्रतिष्ठितः ॥ २८ ॥**

इसकेलिये एक स्वतन्त्र अध्यात्मविषय निबन्ध लिखो, जिससे इन लोगों को विश्वास हो जाय ॥२८॥

**नैष्कर्म्यसिद्धिं व्यदधान्नैष्कर्म्यस्य यतो भवेत् ।**
**ज्ञप्तिः प्राप्तिश्च तां सोऽपि दर्शयामास देशिकम् ॥ २९ ॥**

सुरेश्वर ने प्रथम नैष्कर्म्यसिद्धि बनायी, नैष्कर्म्य-मोक्ष की जिससे सिद्धि अर्थात् ज्ञप्ति और प्राप्ति हो। उसे बनाकर फिर आचार्य को दिखाया ॥२९॥

**दृष्ट्वा देशिकवर्यस्तां दर्शयामास चापरान् ।**
**प्रत्ययोऽजनि सर्वेषां नान्योऽस्त्येतत्समः सुधीः ॥ ३० ॥**

स्वयं आचार्य ने नैष्कर्म्यसिद्धि देखी और फिर दूसरों को दिखाया। तब सब को यह विश्वास हुआ कि सुरेश्वर के सामान ज्ञानी शिष्यों में दूसरा कोई नहीं है ॥३०॥

**शशाप विश्वरूपोऽपि वार्त्तिकं विघ्नितं यतः ।**
**नान्यैर्विरचितं चोर्व्यां वार्त्तिकं प्रसरेदिति ॥ ३१ ॥**

वार्त्तिक बनाने में विघ्न डाला इसलिये सुरेश्वर ने श्राप दिया कि दूसरा कोई वार्तिक बनावे तो भी उसका प्रसार नहीं होगा ॥३१॥

नैष्कर्म्यसिद्धिं तां दृष्ट्वा तुष्टमाचार्यमाह च ।
ख्यातिलोभादितो नैषा गुर्वादेशात्कृता मया ।। ३२ ।।

नैष्कर्म्यसिद्धि को देख कर आचार्य संतुष्ट हुए। तब सुरेश्वर ने कहा कि ख्याति लोभादि से नहीं किन्तु गुरु आज्ञा पालन के लिये मैंने यह बनाया है ॥३२॥

अपि प्राग् गृहिणं नो मां तत्संस्कारोऽनुवर्त्तते ।
न युवानं शिशोर्वृद्धं न यूनो वासना यथा ।। ३३ ।।

पहले मैं भले ही गृहस्थ रहा फिर भी गृह संस्कार मुझमें नहीं। शिशु का संस्कार युवावस्था में नहीं और युवा का संस्कार वृद्धावस्था में नहीं, वैसे पूर्वाश्रम का संस्कार उत्तराश्रम में मुझमें नहीं है ॥३३॥

नास्ति संन्यास इत्येष न मया पक्ष आस्थितः ।
मोक्षहेतौ विवादो हि विचारेण निर्वर्त्तितः ।। ३४ ।।

संन्यास नहीं है ऐसा पक्ष मैंने नहीं लिया था। मोक्ष में कारण ज्ञान या कर्म इस पर विवाद चला था और विचार से उस विवाद का ही निर्णय किया गया था ॥ ३४ ॥

भिक्षुकाः पूजिता नेति पूजिते भवति प्रभो ।
कथं यथार्थं को नाम लोकाननपिधायकः ।। ३५ ।।

मैंने भिक्षुकों की पूजा नहीं की यह बात किस प्रकार सत्य है? जब कि मैंने आपकी ही पूजा की थी। दुनियाँ का मुँह कौन बन्द कर सकता है ॥ ३५ ॥

तत्त्वनिर्णायको वादो ज्ञाततत्त्वश्च वादतः ।
विरागादकृषि न्यासमहं न तु पराजयात् ।। ३६ ।।

वाद हमेशा तत्त्वनिर्णयार्थं होता है। वाद से मुझे तत्त्व का निर्णय हुआ। वैराग्य हुआ और मैंने संन्यास लिया, न कि पराजय से संन्यास लिया ॥ ३६ ॥

कर्मकाण्डादिषु पुरा निबन्धो विहितो मया ।
नेतः परं भवत्पादसेवामुल्लङ्घ्य किंचन ।। ३७ ।।

कर्म काण्डादि में मैंने पहले ग्रन्थ बनाये। परन्तु अब मैं आपकी चरण सेवा छोड़कर कुछ नहीं करूँगा ॥ ३७ ॥

भाष्ये शारीरके कर्त्तुमशक्यं वीक्ष्य वार्त्तिकम् ।
सशुचं प्राह भगवान् त्रय्यन्ते कुरु वार्त्तिकम् ॥ ३८ ॥

शारीरक भाष्य पर वार्त्तिक लिखना अशक्य देखकर सुरेश्वर को बड़ा दुःख हुआ। तब भगवान आचार्यपाद ने कहा उपनिषदों पर वार्त्तिक लिखो ॥ ३८ ॥

शाखा मे तैत्तिरीयास्ति काण्वशाखा तवापि च ।
तदन्तभाष्ययोरिष्टं वार्त्तिकं रचय द्वयम् ॥ ३९ ॥

मेरी तैत्तिरीय शाखा है। तुम्हारी काण्वशाखा है। दोनों के भाष्यों पर वार्त्तिक बनाना अभीष्ट है। अतः वही बनाओ ॥ ३९ ॥

मा शङ्किष्ठाः पूर्वमिव शठानामवरोधनम् ।
प्रमाणमिह मद्वाक्यं तच्छ्रुत्वा स प्रसन्नधीः ॥ ४० ॥

शठों के अवरोध के बारे में पहले जैसे अब संदेह न करो। इसमें मेरा वचन ही प्रमाण है। यह सुनकर सुरेश्वर प्रसन्न हुए ॥ ४० ॥

आज्ञाऽविचारणीयैव गुरूणामिति निश्चितः ।
रचयित्वा वार्त्तिके द्वे दर्शयामास देशिकम् ॥ ४१ ॥

गुरुओं की आज्ञा अविचारणीय है। ऐसा निश्चय कर बृहदारण्यक तथा तैत्तिरीय पर दो वार्त्तिक लिखकर आचार्य को दिखाया ॥ ४१ ॥

भाष्ये सनन्दनोऽकार्षीट्टीकां गुरुनिदेशतः ॥
प्राक् पञ्चपादिकां पश्चाद् वृत्तिमेकादशस्वपि ॥ ४२ ॥

भाष्य के ऊपर पद्मपाद ने गुरु आज्ञा से प्रथम पञ्चपादिका और शेष ग्यारह पादों पर वृत्ति लिखी ॥ ४२ ॥

टीकां विधाय स स्वीययशोविजयडिण्डिमम् ।
सनन्दनो व्यरचयत्तामेव गुरुदक्षिणाम् ॥ ४१ ॥

अपने यश की विजय डिंडिम स्वरूपी टीका बनाकर पद्मपाद ने उसी को गुरु दक्षिणा के रूप में आचार्य को दिया ॥ ४३ ॥

गतिं ग्रहाणामालोक्य देशिको मण्डनं जगौ ।
पञ्चपादाः प्रसिद्धाः स्युस्तत्र सूत्रचतुष्टये ॥ ४४ ॥

ग्रहगति को देखकर आचार्य ने मण्डन को कहा कि सनन्दन की टीका में पाँच ही पाद प्रसिद्ध होंगे और उनमें भी चार सूत्र की व्याख्या ही लोकदृश्य होगी ॥ ४४ ॥

प्रारब्धकर्मशेषाच्च भूत्वा वाचस्पतिः पुनः ।
विधास्यसे भाष्यटीकां त्वमाभूतलयस्थिताम् ॥ ४५ ॥

प्रारब्ध कुछ अवशिष्ट है इसलिये तुम पुनः वाचस्पति के रूप में जन्म लोगे और प्रलयपर्यन्तस्थायी भाष्यटीका लिखोगे ॥ ४५ ॥

अथ चानन्दगिर्यादीन् निबन्धानात्मगोचरान् ।
दिदेश देशिकः कर्त्तुं यथादेशं च ते व्यधुः ॥ ४६ ॥

इसके बाद आचार्य ने आनन्दगिरि आदि को भी अध्यात्मनिबन्ध लिखने कहा। आदेशानुसार उन लोगों ने भी अनेक ग्रन्थ बनाये ॥ ४६ ॥

भाष्याब्जेशः शिष्यकोटिप्रबन्धस्वांशुव्रातैर्लोकचेतस्तमांसि ।
भिन्दन् दिव्यः पप्रथे दर्शनाख्यज्योतिश्चक्रे कोऽपि
सर्वोर्ध्वतेजाः ॥ ४७ ॥

भाष्यरूपी सूर्य ने अनेक शिष्यरचित नाना ग्रन्थरूपी अपनी किरणों से लोकचित्त स्थित अन्धकार को चीरता हुआ दर्शनरूपी ज्योतिचक्र में सर्वोपरि होकर प्रथित हुआ ॥ ४७ ॥

शंकराचार्यचरिते जयमङ्गलगुम्फिते ।
गतो वार्त्तिकनिर्माणयुतः सर्गस्त्रयोदशः ॥ १३ ॥

—:०:—

## अथ चतुर्दशः सर्गः

पद्मपादो गुरुं तीर्थयात्रां कर्त्तुमना मुनिः ।
अनुज्ञां समयाचिष्ट देशिको व्यादिशत्तदा ॥ १ ॥

पद्मपाद मुनि तीर्थयात्रा करने के लिए गुरुजी से अनुज्ञा माँगी। आचार्य ने कहा :—॥ १ ॥

क्षेत्रं हि गुरुसांनिध्यं तीर्थं तीर्थंपदोदकम् ।
गुरूपदेशजन्यात्मदर्शनं देवदर्शनम् ॥ २ ॥

गुरुसांनिध्य ही पुण्य क्षेत्र है। गुरुपादोदक ही महातीर्थं है। गुरूपदेश से उत्पन्न आत्मदर्शन ही देवतादर्शन है ॥ २ ॥

उक्तो विविदिषुन्यासो विद्वत्संन्यास एव च ।
आद्ये सदा त्वंपदार्थः शोध्यो न तु दिशाटनम् ॥ ३ ॥

विविदिषु सन्यास और विद्वत्संन्यास दो होते हैं। उनमें विविदिषु संन्यास में त्वंपदार्थ शोधन करते रहना चाहिए। दिशाओं में पर्यटन करना ठीक नहीं ॥ ३ ॥

क्व जलं क्वाशनं क्वैव स्थेयं शय्यं क्व चेति हि ।
चिन्वतां व्यग्रचित्तानां तीर्थे क्वेवात्मचिन्तनम् ॥ ४ ॥

जल कहाँ मिलेगा, भोजन कहाँ मिलेगा, कहाँ बैठना, कहाँ सोना इस फिकर से व्यग्रचित आत्मचिन्तन क्या कर सकेगा ॥ ४ ॥

ज्वरातिसारपोडाद्यैर्यदि वा परिपीडितः ।
स्थातुं गन्तुमनिश्चिन्वन् कथमात्मानमीक्षताम् ॥ ५ ॥

कहीं ज्वर अतिसारादि हुआ तो जायें कि ठहरें यह निश्चय न कर सकने से क्या आत्मानुसंधान होगा ॥ ५ ॥

नियमेन न च स्नानं नार्चनं न समाधयः ।
क्षुधातुरस्य भिक्षैकमनसः क्वात्मचिन्तनम् ॥ ६ ॥

और नियम से न स्नान होगा, न अर्चन और न समाधि ही, क्षुधातुर होने पर भिक्षा में मन लगा रहेगा। क्या आत्मचिन्तन होगा ॥ ६ ॥

सत्यं भगवता प्रोक्तं वक्तुं युक्तं न तत्र मे ।
तथापि देशसंवीक्षाकुतूहलहृदस्म्यहम् ॥ ७ ॥

पद्मपाद ने कहा :—भगवन् ! आपका वचन सत्य है। उसपर बोलना मेरे लिये युक्त नहीं है। फिर भी देशों के देखने की कुतूहलता मेरे मन में हैं ॥ ७ ॥

पन्थानः कष्टबहुलाः किन्तु पुण्यानि तद्विना ।
न लभ्यन्ते ज्वरादिस्तु प्रारब्धैकनिबन्धनः ॥ ८ ॥

मार्ग में कष्ट होते हैं। परन्तु कष्ट के बिना पुण्य भी तो नहीं होंगे। ज्वरादि तो प्रारब्ध का फल है ॥ ८ ॥

**वृद्धौ नाशे च सर्वत्र निदानं दैवमेव तत् ।**
**गृहे वा विपिने वापि हार्यमाव्यं हरेदवेत् ॥ ९ ॥**

वृद्धि या नाश में सर्वत्र दैव ही कारण है। वह चाहे घर में हो चाहे वन में, हरणीय का हरण और रक्षणीय की रक्षा करके ही रहेगा ॥ ९ ॥

**स्नानार्चनादिकं कर्म मार्गे संकोचमर्हति ।**
**इति मन्वादयः प्राहुर्धर्मस्तेन न हीयते ॥ १० ॥**

स्नान अर्चनादि सभी मार्ग में संक्षेप से किया जा सकता है ऐसा मन्वादिवचन है, अतएव उससे धर्महानि नहीं होती ॥ १० ॥

**अधिष्ठानं परं ब्रह्म सर्वत्र परिपश्यताम् ।**
**यत्र यत्र मनो याति तत्र तत्र समाधयः ॥ ११ ॥**

सर्वत्र अधिष्ठान ब्रह्म को जो देखते हैं उनके लिए जहाँ भी मन जाय वहीं समाधि है ॥ ११ ॥

**तीर्थे वसन्ति सद्विद्यास्तत्र मित्रं न दुर्लभम् ।**
**बुधो बुधानामुदितं मित्रं सत्यार्थवेदिभिः ॥ १२ ॥**

तीर्थों में ज्ञानी लोग रहते हैं। वहाँ मित्र दुर्लभ नहीं होते। ज्ञानी ज्ञानी के मित्र होते हैं ॥ १२ ॥

**दूरस्थोऽपि न दूरस्थो यो यस्य हृदि संस्थितः ।**
**समीपस्थोऽपि दूरस्थो यो यस्य हृदि न स्थितः ॥ १३ ॥**

दूरस्थ भी वह दूरस्थ नहीं जो जिसके हृदय में हो। और समीपस्थ भी दूरस्थ है जो जिसके हृदय में न हो। [द्रष्टव्य :—यहाँ प्रायः श्लोकों में विविदिषा संन्यासी को लेकर ही कहा गया है। विविदिषा संन्यासी के लिये आश्रम कर्म आवश्यक होने से पूर्वोत्तरपक्षसंगति है] ॥ १३ ॥

**आग्रहो यदि ते गन्तुं न विहन्मि मतिं तव ।**
**मा भूद्विशेषगमनं दुःखायेति न्यषेधयम् ॥ १४ ॥**

यदि तुम्हारा जाने का आग्रह हो तो मैं बीच में विघ्न नहीं डालता। कोई कष्ट बीच में न हो इसके लिए मैंने कहा ॥ १४ ॥

तत्रेदं नियतं ध्येयं तीर्थमार्गावलम्बिना ।
चौरमार्गः परित्याज्यः सङ्गो ग्राह्यः सदा सताम् ॥ १५ ॥

हाँ, तीर्थयात्री को ये बातें ध्यान में रखना चाहिये । एक तो चोरों के मार्ग से कभी नहीं चलना चाहिये, भले ही मार्ग टूंका हो । दूसरा तकलीफ होने पर भी सत्पुरुष का ही संग ढूंढ़ना चाहिये ॥ १५ ॥

आसङ्गो नैव सद्भिश्च वियोगे दुःखदो यतः ।
चौरेभ्यो वञ्चकेभ्यश्च न प्रमाद्यं कथंचन ॥ १६ ॥

सत्पुरुषों से भी संग करो-आसंग (आसक्ति) नहीं । वियोग में दुःख होगा । चोर और ठगों के बारे में कभी प्रमाद न करना चाहिए ॥ १६ ॥

पूज्यानां नैव कर्त्तव्यः कुत्राप्येव व्यतिक्रमः ।
इत्युपादिशदाचार्यः प्रतिष्ठासुं सनन्दनम् ॥ १७ ॥

तं प्रस्थाप्य कियन्तं च कालं शृङ्गगिरौ गुरुः ।
सुरेश्वरादिभिः सार्धं निनाय यमिनां वरः ॥ १८ ॥

पूज्यों का कभी भी व्यतिक्रम न करें । इस प्रकार आचार्य ने पद्मपाद को उपदेश दिया (द्रष्टव्य :—पहले निषेध और बाद में आग्रह देखकर अनुमति यह यद्यपि सामान्य लोगों के जैसा दीख रहा है । तथापि यह केवल सामान्य बात नहीं है । क्योंकि आगे पंचपादिका के विनाश का पूर्वाभास आचार्य को मिल रहा था । इसलिए उन्होंने पद्मपाद को रोकना चाहा । प्रारब्ध को बलवान् देखकर अन्त में अनुमति दी) पद्मपाद को बिदा कर कुछ काल तक सुरेश्वरादि के साथ आचार्य शृंगेरी में रहे ॥१८॥

अथान्तिमदशापन्नां स्मरन्तीं मातरं गुरुः ।
जगाम योगशक्त्यावगत्याऽऽवेद्य निजाश्रवान् ॥१९॥

माता की अन्तिम दशा आ चुकी थी । पुत्र शङ्कर का स्मरण कर रही थीं । आचार्य को मालूम पड़ गया । आज्ञानुवर्ती शिष्यों को समाचार बता कर आचार्य वहाँ से योगशक्ति से आकाशगति के द्वारा उतर कर माता के पास पहुँचे ॥१९॥

ननाम जननीमार्यः सुतं दृष्ट्वा विचिन्त्य च ।
जहौ तापमवाप्याभ्रं ग्रीष्मतप्तेव मेदिनी ॥ २० ॥

आर्य आचार्य ने माता को प्रणाम किया। माता ने पुत्र को देख और पहचान कर उसी प्रकार ताप को छोड़ा जैसे ग्रीष्म तप्त पृथ्वी बादल को प्राप्त होकर ताप को छोड़ देती है ॥२०॥

**किं कृत्यं करवाणीति पृष्टा तुष्टाम्बिकाब्रवीत् ।**
**सिद्धं त्वयीक्षिते सर्वं संस्कार्याऽन्ते तनुस्त्वया ॥ २१ ॥**

क्या कार्य मैं करूँ ऐसा पूछने पर संतुष्ट होकर माता बोली कि तुम्हारे दर्शन से ही सब कुछ हो गया। हाँ, मेरे मरने पर शरीर का संस्कार तुम करो ॥२१॥

**अथ ब्रह्म परं तस्यै निरामयमुपादिशत् ।**
**न मेऽत्र रमते चित्तं निर्गुणे हीति साऽब्रवीत् ॥ २२ ॥**

मृत्युशय्यास्थ माता को आचार्य ने प्रथम निर्गुण ब्रह्म का उपदेश किया माता ने कहा—मेरा मन निर्गुण में नहीं लग रहा ॥२२॥

**स भुजङ्गप्रयातैस्तु शिवं स्तुत्वाऽऽजुहाव च ।**
**शूलादिहस्तं न प्रीणात्येतमित्यम्बिकाऽब्रवीत् ॥ २३ ॥**

भुजङ्गप्रयात स्तोंत्रो से शङ्कर की स्तुति कर आचार्य ने आह्वान किया। माता ने कहा ये शूलडमरूसहित हाथ वाले को मेरा मन पसन्द नहीं कर रहा ॥२३॥

**वक्रतुण्डं गणेशानमम्बिकां सिंहवाहिनीम् ।**
**आहूतावागतौ चापि प्रीणाति स्म न तन्मनः ॥ २४ ॥**

वक्रतुण्ड गणेशजी और सिंहवाहिनी दुर्गा माता का जो आह्वान से आ गये थे माता का मन पसन्द नहीं करता ॥२४॥

**अथ कृष्णं सरोजाक्षं श्यामलं कुलदेवताम् ।**
**अस्तवीत्परया प्रीत्या देशिको वेणुभूषितम् ॥ २५ ॥**

इसके बाद आचार्य ने कुल देवता श्यामसुन्दर कमलनयन वेणुभूषित कृष्ण की स्तुति की ॥२५॥

**त्रिभङ्गललितं श्यामं लसत्कुञ्चितमूर्धजम् ।**
**गोपगोपीवृतं दिव्यं कदम्बतरुमूलगम् ॥ २६ ॥**

दृष्ट्वा प्रसन्नहृदया ध्यायन्ती च तमेव सा ।
तत्याज देहमबला स्तूयमानाऽमराधिपैः ॥ २७ ॥

गाय एवं गोपियों से घेरे हुए कदम्वतरु के मूल में स्थित घुंघराले बाल वाले त्रिभंगललित श्यामसुन्दर भगवान को देखकर माता प्रसन्न हुई और उन्हीं का ध्यान करती हुई शरीर को छोड़ गयी । थी अबला, फिर भी देवाधिराज भी उनकी स्तुति उस समय कर रहे थे ॥२६-२७॥

अग्निर्ज्योतिरहः शुक्लपक्षं तीर्त्वोत्तरायणम् ।
सभानिलार्कचन्द्रांश्च समतिक्रम्य विद्युतम् ॥ २८ ॥

अमानवेन सा नीयमाना तत्पुरुषेण हि ।
ब्रह्मलोकं प्रपद्यान्ते ब्रह्मविद् ब्रह्म साऽभ्यगात् ॥ २९ ॥

उपासकों की गति के अनुसार वे माता भी, अग्नि, ज्योति, दिन, शुक्ल पक्ष, उत्तरायण, संवत्सर, अनिल, सूर्य, चन्द्र, एवं विद्युत् को पार कर अमानवतत्पुरुष के द्वारा ऊर्ध्व नीत होकर ब्रह्मलोक पहुँची और ब्रह्मज्ञान पाकर ब्रह्म को प्राप्त हो गयी ॥२८-२९॥

संश्चिकीर्षुस्तनुं बन्धूनाजुहाव स देशिकः ।
यतेरनधिकारित्वमुक्त्वा ते न समागताः ॥ ३० ॥

दाहादि संस्कार के लिए आचार्य ने बन्धुओं को बुलाया । परन्तु यह कह कर नहीं आये कि तुम संन्यासी को संस्कार करने का क्या अधिकार ॥३०॥

अर्थिताश्च ददुर्नाग्निं मथित्वैवोदभावयत् ।
ददाह मातृदेहं च गृहाभ्यर्णं यतात्मवान् ॥ ३१ ॥

मंथन कर आचार्य ने अग्नि उद्भावन किया और घर के पास ही धैर्य रख कर शरीर दाह किया ॥३१॥

ततः शशाप तान् सर्वान् सर्वे वेदबहिष्कृताः ।
गृहान्तिकश्मशानाश्च यूयं भवत दुर्नयाः ॥ ३२ ॥

दाहोत्तर आचार्य ने उन सबको श्राप दिया कि हे दुर्बुद्धि लोग ! तुम सब के सब वेद रहित हो और तुम्हारे घरों के पास ही श्मशान रहे ॥३२॥

अद्यापि वेदरहिता गृहान्तिकचिताजुषः ।
यतिभिक्षाविहीनाश्च सन्त्येकेऽम्बलवासिनः ॥ ३३ ॥

आज भी केरल में अम्बलवासी (मंदिरवासी) कहलाने वालों में कुछ ऐसे हैं जो वेदरहित हैं गृहसमीपश्मशान वाले और यतिभिक्षा रहित हैं। ये ही आचार्य शप्त ब्राह्मण हैं [द्रष्टव्य—तिरुओपाड नम्बीशन् इत्यादि उन की विशेषसंज्ञा आज प्रसिद्ध हैं। अन्य सभी वेदविशिष्ट होने से पारिशेष्यात् ये ही आचार्यशप्तत्वेन माधवाचार्याभिमत हो सकते हैं] ॥३३॥

केदारं बदरीं काशीं गयां कालीपदं पुरीम् ।
सेवमानः क्रमात्पद्मपादोऽयाद्दक्षिणां दिशम् ॥ ३४ ॥

केदार, बद्रीनाथ, काशी, गया, कलकत्ता और पुरी होते हुए पद्मपादाचार्य क्रमशः दक्षिण की ओर पहुँचे ॥३४॥

कालहस्तीश्वरं काञ्चीकल्लालेशादिकांस्तथा ।
वीक्ष्यागमत्पुण्डरीकपुरं स शिवताण्डवम् ॥ ३५ ॥

कालहस्ती, कांची तथा कल्लालेश्वर होते हुए पद्मपाद पुण्डरीकपुर आये जहां शिव-ताण्डव हुआ था ॥३५॥

वहन्त्याः शिवगङ्गायास्तत्र वृत्तमिदं जगुः ।
श्रान्तेन ताण्डवे गङ्गा स्मृतेशेन समागता ॥ ३६ ॥

वहां शिवगङ्गा बह रही है। उसका इतिवृत्त कुछ लोग यह कहते हैं कि ताण्डवनृत्य में शंकर जी थक गये तो गङ्गा का स्मरण किया और साक्षात् गङ्गा वहां आयी ॥३६॥

परे च पार्वती तत्र शिवश्रान्त्यपनुत्तये ।
गङ्गारूपं दधारेति पण्डिताः संप्रचक्षिरे ॥ ३७ ॥

दूसरे पण्डितों का कहना है कि शंकरजी की थकावट दूर करने के लिए पार्वती ने स्वयं गङ्गा का रूप धारण किया ॥३७॥

अन्ये ताण्डववेलायां जटाजूटपतत्कणा ।
गङ्गैव सेति जगदुः पण्डिताः पारदर्शिनः ॥ ३८ ॥

ताण्डवनृत्य के समय जटाजूट से गिरे हुए गङ्गा कण ही वह गङ्गा है ऐसा अन्य पारदर्शी पण्डितों का कहना है। पारदर्शी इसलिए कि शंकरजी का थकना युक्त नहीं और गङ्गा कणों का गिरना संभव भी है ॥३८॥

तीर्थायुतानि पुरुपुण्यकराणि दृष्ट्वा
तुष्टान्तरोऽब्जचरणो भुवनं पुनानः।
रामेश्वरं परमपुण्यतमं यियासु-
रायान्नदीं सुसलिलां स कवेरकन्याम् ॥ ३९ ॥

अनन्तपुण्यदायी हजारों तीर्थस्थानों का दर्शन करते हुए प्रसन्नचित्त पद्मपाद स्वयं जगत् को पवित्र करते जा रहे थे। वहाँ से फिर अत्यन्त पुण्यतम रामेश्वर जाने की इच्छा से विमलजला कावेरी नदी के किनारे आये ॥३९॥

संदर्शनेन किल या विधुनोति सद्यो
जन्मान्तरायुतकृतानि हि दुष्कृतानि।
भक्तिं प्रयच्छति हरौ विमलां च बुद्धिं
प्रासीददब्जचरणोऽपि नदीमियंस्ताम् ॥ ४० ॥

जो दर्शन मात्र से उसी समय हजारों जन्मों में किए पापों को नष्ट करती है, हरि में भक्ति उत्पन्न करती है और बुद्धि को निर्मल बना देती है उस कावेरी नदी के किनारे आकर पद्मपाद बड़े प्रसन्न हुए [द्रष्टव्यः—इन सब महत्ताओं से युक्त होने पर भी उसके किनारे रहने वाले पद्मपादमातुल की बुद्धि शुद्ध नहीं हुई, यही हरि की माया है) ॥४०॥

शंकराचार्यचरिते जयमङ्गलगुम्फिते।
सर्गश्चतुर्दशो यत्र मातुद्धारोऽनुवर्णितः ॥ १४ ॥

❋

## अथ पञ्चदशः सर्गः

मध्येमार्गमथायातो मातुलस्य गृहं सुधीः।
अद्वैतविद्यां लोकेभ्यो वितन्वानः सनन्दनः ॥ १ ॥

तीर्थयात्रा के अवसर पर अद्वैत विद्या का प्रसार करते हुए सनन्दन कावेरी के पास मार्गमध्य में अपने मामा के घर पहुँचे ॥१॥

सशिष्यमागतं श्रुत्वा बन्धुवर्गः सनन्दनम्।
जहास मुमुदे भक्त्या रुरोद च ननाम च ॥ २ ॥

शिष्यों के सहित सनन्दन को आये सुनकर बन्धुवर्गों में कोई खुशी से हँसने लगे, कोई आनन्दमग्न होने लगे, कोई भक्ति से रोने लगे और कोई चरणों में प्रणाम करने लगे ॥ २ ॥

धन्यो यत्याश्रमो यत्र न दारसुतबन्धुताः ।
शकुन्त इव वृक्षेषु यावत्कार्यं जनेष्वपि ॥ ३ ॥

धन्य है यह यति आश्रम। जिसमें पुत्र-दार-बन्धुओं की कोई खटपट नहीं। पक्षी उतना ही मतलब रखते हैं वृक्षों से, जितने से उसका कार्य सिद्ध होता है, वैसे यति भी गृहस्थों से उतना ही सम्वन्ध रखते हैं जितने से कार्य पूरा हो ॥ ३ ॥

सारं गृहीत्वा पुष्पेभ्यो यथा निर्याति षट्पदः ।
भिक्षित्वौदनमोकोभ्यो यतिरन्यत्र गच्छति ॥ ४ ॥

पुष्प से सार (मधु) लेकर भ्रमर अन्यत्र चला जाता है। यति गृहों से भोजन भिक्षा लेकर अन्यत्र चले जाते हैं ॥ ४ ॥

तृष्णान्तो न क्वचिद् दृष्टस्तृष्णान्तरजनन्यसौ ।
दारार्था प्रथमा तृष्णा पुत्रार्था च ततो यथा ॥ ५ ॥

तृष्णा का अन्त होता नहीं। एक तृष्णा दूसरी तृष्णा की जननी है। जैसे प्रथम दारतृष्णा होती है। फिर वही पुत्रतृष्णा को उत्पन्न करती है ॥ ५ ॥

अज्ञातगोत्रा विज्ञातस्वात्मतत्त्वा यतीश्वराः ।
यदृच्छालाभसंतुष्टाश्चरन्ति सदनुग्रहाः ॥ ६ ॥

जिनके नामगोत्र के बारे में लोगों को पता नहीं रहता ऐसे आत्मतत्त्व को जानने वाले महात्मा लोग यदृच्छा लाभ से संतुष्ट होकर विचरण करते हैं, जिनका अनुग्रह अव्यर्थ होता है ॥ ६ ॥

तीर्थीकर्त्तुं हि तीर्थानि चरन्ति यतिपुङ्गवाः ।
शुद्धात्मस्पृष्टसम्भो हि तीर्थमाहुर्मनीषिणः ॥ ७ ॥

महात्मा पुरुष तीर्थों को तीर्थ वनाने के लिये ही विचरण करते रहते हैं। महात्मा लोग जहाँ रहते रहे वही तो आज तीर्थ कहलाते हैं ॥ ७ ॥

वस्तव्यं भवताऽत्रैव किंचित्कालं दयालुना ।
वयं हि गृहिणः पापा उद्धार्या हि भवादृशैः ॥ ८ ॥

आप दया कर कुछ दिन यहीं वास करें। हम गृहस्थी पापवान् होते हैं आप जैसे ही तो हमारा उद्धार करेंगे ॥ ८ ॥

इति तेषां वचः श्रुत्वा पद्मपादो जगाद तान् ।
संयोगे च वियोगे च कालः प्रभवतीश्वरः ॥ ९ ॥

पद्मपाद बोले कि संयोग और वियोग में काल ही प्रभु है ॥ ९ ॥

मध्याह्ने क्षुधितं क्लान्तमन्नाद्यैर्हि ससत्कृति ।
निर्वापयन्ति येऽनन्तपुण्यास्ते गृहिणो भुवि ॥ १०

मध्याह्न में भूख से व्याकुल महात्माओं को सत्कार के साथ भोजनादि से तृप्त करने वाले गृहस्थ तो अनन्त पुण्य के भागी होते हैं ॥ १० ॥

तपो यस्यान्नतः पुष्टस्तपस्वी कुरुते कृती ।
फलमर्धं कर्त्तुरन्नदातुरर्धमिति स्मृतिः ॥ ११ ॥

जिसके अन्न से पुष्ट होकर महान् तपस्वी तप करते हैं उस तप का आधा फल कर्त्ता तपस्वी को मिलता है और आधा फल अन्नदाता को मिलता है ऐसा स्मृतिवचन है ॥ ११ ॥

देहमूलं तपः प्रोक्तमन्नमूलं कलेवरम् ।
अन्नं गृहस्थमूलं च शस्यतेऽतो गृही बुधैः ॥ १२ ॥

तप देहमूलक होता है, देह अन्नमूलक होता है और अन्न गृहस्थमूलक होता है। अतएव विद्वान् पुरुष गृहस्थाश्रम की प्रशंसा करते हैं ॥ १२ ॥

उपजीवन्ति सर्वेऽपि गृहिणं द्रविणैर्युतम् ।
क्वचिच्चौर्यात्क्वचित्प्रेम्णा क्वचिद्दानात्क्वचिद्बलात् ॥ १३ ॥

सभी प्रायः धनवान् गृहस्थ के उपजीवी होते हैं। कोई चोरी से उनसे धन प्राप्त करता है, कोई प्रेम से, कोई दान से और कोई बल से। (आखिर पैसे वाले से ही पैसे लिये जा सकते हैं) ॥ १३ ॥

गृहान्तर्मूषकाद्याश्च बहिर्मृगगवादयः ।
उपजीवन्ति गृहिणं पुण्यं किं तस्य वर्ण्यते ॥ १४ ॥

यहाँ तक कि घर के अन्दर चूहे आदि और घर के बाहर गाय कुत्ते आदि भी गृहस्थ के उपजीवी होते हैं। उस गृहस्थ के पुण्य का क्या वर्णन किया जाय ॥ १४ ॥

अथ भुक्तोपविष्टं तं मातुलः कुशलं ब्रुवन् ।
पप्रच्छ किमिदं पुस्तं भाष्यटीकां स चाब्रवीत् ॥ १५ ॥

भोजन करके बैठे थे। मामा कुशल पूछ रहे थे। पूछा यह पुस्तक क्या है आप की झोली में? पद्मपाद ने कहा कि यह शारीरकभाष्य की टीका है ॥ १५ ॥

तद् द्रष्टुमिच्छवे प्रादाद् दृष्ट्वा मोदमवाप सः ।
खेदं चावाप स स्वेष्टप्राभाकरनिराकृतेः ॥ १६ ॥

उसे देखने की इच्छा प्रकट की तो पद्मपाद ने दिया। देखकर मामा साहेब प्रसन्न भी हुए और अपने इष्ट प्राभाकरमतनिराकरण देखकर खिन्न भी हुए ॥ १६ ॥

सेतुं गच्छाम्यहं न्यस्य पुस्तकं तु भवद्गृहे ।
मज्जीवोऽत्र तथा प्रीतिर्यथान्येषां गृहादिषु ॥ १७ ॥

पद्मपाद :—मैं सेतुबन्ध जा रहा हूँ। पुस्तक यहीं आपके घर में रख जाता हूँ। मेरा जीव तो इसी में है। और उतनी ही प्रीति इसमें मेरी है जितनी दूसरों को गृहादि में होती है ॥ १७ ॥

इत्युक्त्वानुमतस्तत्र निर्ययौ न्यस्य पुस्तकम् ।
गन्तुर्वामाक्षि पस्पन्दे क्षुतिरुच्चैरवर्त्तत ॥ १८ ॥

इतना कहा तो मामा ने अनुज्ञा दी। पुस्तक वहीं रखकर वे निकले। निकलते ही वामाक्षिस्पन्दन होने लगा। जोरों से छींक आयी ॥ १८ ॥

तस्मिन् याते मातुलोऽस्य ग्रन्थं मेने निजार्दनम् ।
दहेयं चेद्भवेन्निन्दा नास्मि तत्खण्डने क्षमः ॥ १९ ॥

पद्मपाद के जाने पर मामा ने सोचा कि यह ग्रन्थ तो मेरा ही मर्दन करेगा। इसको अगर जला डालूँ तो लोग निन्दा करेंगे। और इसका खण्डन करूँ तो उतनी क्षमता मुझमें नहीं है ॥ १९ ॥

एकदाऽचिन्तयत्सोऽपि धक्ष्यामि स्वं निकेतनम् ।
ग्रन्थोऽयं धक्ष्यते तत्र नापकीर्त्तिश्च मे भवेत् ।। २० ।।

एक दिन मामा ने सोचा कि मैं अपना घर ही जला डालूँ । उसमें यह ग्रन्थ भी जल जायेगा और मेरी अपकीर्त्ति भी गहीं होगी ।। २० ।।

सीतावियोगखिन्नो हि रामोऽब्धि वीक्ष्य विस्मितः ।
कथं तरेयमिति स चिन्ताव्याकुलितः पुरा ।। २१ ।।

पहले समय की बात है—सीता के वियोग से दुःखी राम समुद्र किनारे पहुँचे । विशाल समुद्र को देखकर वे आश्चर्य में पड़े । सोचने लगे कि कैसे इसको पार करूँ । वे चिन्तित होने लगे ।। २१ ।।

तत्रागमत्तदागस्त्यो महर्षिस्तेजसां निधिः ।
वृत्तं विदित्वा स प्राह रामचन्द्रं महामतिम् ।। २२ ।।

उस समय वहाँ तेजस्वी महर्षि अगस्त्यजी पहुँचे । सारा वृत्तान्त मालूम हो गया तो रामचन्द्र से वे बोलने लगे ।। २२ ।।

पीत्वा शुष्कं पुरेवाहं कर्त्तुं शक्नोमि सागरम् ।
तत्र कीर्त्तिर्ममैव स्यान्न पुनस्ते रघूत्तम ।। २३ ।।

मैं पहले के समान फिर से सागर को पीकर सुखा सकता हूँ । किन्तु उसमें कीर्त्ति मेरी होगी, रघुवर ! आपकी नहीं ।। २३ ।।

सेतुं निर्मापयातस्त्वं यतः कीर्त्तिर्भवेत्तव ।
तथेति राघवः सिन्धौ दीर्घं सेतुमचीकरत् ।। २४ ।।

अतः आप स्वयं समुद्र पर सेतु बनवाओ जिससे आपकी कीर्त्ति रहेगी । ठीक, कहकर राम ने समुद्र पर लम्बा पुल बनवाया ।। २४ ।।

तं दृष्ट्वा तत्र च स्नात्वा रामनाथं सनन्दनः ।
ददर्श तत्र च कथाः काश्चित्प्रावर्त्तयद्यतिः ।। २५ ।।

सनन्दन ने उसी सेतुबन्ध का दर्शन किया, वहाँ स्नान किया, फिर रामेश्वर का दर्शन किया । उसके बाद कुछ कथा प्रारम्भ की ।। २५ ।।

अपृच्छत्तत्र कश्चित्तु कथाविस्तारहेतवे ।
रामेश्वरपदे को नु समासो बुधसंमतः ।। २६ ।।

कथा का विस्तार करने के लिए एक ने पूछा कि रामेश्वर पद में कौन सा समास है ॥ २६ ॥

**षष्ठीतत्पुरुषं रामो बहुव्रीहिं महेश्वरः ।**
**कर्मधारयमाहुः स्म सुरेन्द्राद्याः प्रतिष्ठितौ ॥ २७ ॥**

सनन्दन ने कहा :—राम का ईश्वर रामेश्वर ऐसा षष्ठी समास राम ने कहा। शंकर ने कहा राम ईश्वर जिस मेरा वह रामेश्वर ऐसा बहुव्रीहि समास है। ब्रह्मा आदि देवताओं ने कहा राम ही ईश्वर अर्थात् शंकर ऐसा कर्मधारय है ॥ २७ ॥

**इत्थं तत्र कथाः कुर्वन्न्युष्य किंचिदहानि च ।**
**प्रतस्थे मातुलगृहं यत्रासौ कपटार्त्तिमान् ॥ २८ ॥**

ऐसी ऐसी कथायें चलती रही। कुछ दिन वहाँ रहकर फिर मामा के घर की ओर पद्मपाद ने प्रस्थान किया। जहाँ मामा साहेब कपट दुःख दिखाये वैठे थे ॥ २८ ॥

**मा खेदमावह महन् दग्धा बुद्धिर्न मे यतः ।**
**पुनष्टीकां करिष्यामीत्येवं व्यवसितः पुनः ॥ २९ ॥**

पद्मपाद ने कहा श्रीमन्! आप खेद न करें। मेरी वुद्धि तो जली नहीं है। मैं फिर से टीका लिखता हूँ। ऐसा कहकर फिर से टीका लिखने वैठे ॥ २९ ॥

**तन्मातुलः पुनर्भीतोऽक्षिपद् द्रव्यं किमप्यसौ ।**
**मनोघ्नं भोजने तस्येत्येवं केचित्प्रचक्षते ॥ ३० ॥**

उनके मामा फिर से भीत हो गये और भोजन में ऐसा कोई जहर डाला जिससे पद्मपाद की बुद्धि भी मारी गयी। ऐसे कुछ लोग वर्णन करते हैं। [सत्यता कहाँ तक यह भगवान् जाने] ॥३०॥

**चतुर्दिक्षु गतास्तीर्थेष्वागता मिलिता गुरुम् ।**
**चरन्तं केरलप्रान्ते जज्ञुरन्योन्यवार्त्तया ॥ ३१ ॥**

तीर्थयात्रा के लिये चारों ओर गये हुए सभी एकत्र आकर सम्मिलित हो गये। अन्योन्य वार्त्ता से उनको मालूम पड़ गया कि आजकल आचार्य केरल प्रान्त में ही विचरण कर रहे हैं ॥३१॥

आचार्यचरणाम्भोजदर्शनोत्कण्ठमानसाः ।
प्रतस्थिरे ततः सर्वे केरलान् श्रद्धयान्विताः ॥ ३२ ॥

आचार्य चरण दर्शन के लिये उत्कण्ठित होकर वे सब केरल की ओर चल पड़े ॥३२॥

महासुरालये गीर्भिर्देशिकं यतिपुङ्गवाः ।
विष्णुं स्तुवन्तं श्रौतीभिर्ददृशुः प्रीतिसंयुताः ॥ ३३ ॥

अनन्तशयन में आचार्य का उन्होंने दर्शन किया। आचार्य भगवान विष्णु की ब्रह्मतत्त्वरूप से स्तुति कर रहे थे। ("प्रातः स्मरामि हृदि संस्फुरदात्मतत्त्वं" इत्यादि द्रष्टव्य है। "तं देवदेवमजमच्युतमाहुरग्र्यं" इत्यादि वहाँ के शब्द यहाँ विशेषतया अवलोकनीय है) ॥३३॥

पप्रच्छ कुशलं सर्वान् प्रसन्नवदनान् गुरुः ।
खिन्नचित्तमिवालक्ष्याऽप्राक्षीत्तत्र सनन्दनम् ॥ ३४ ॥

आचार्य ने सबसे कुशल पूछा। वे सब प्रसन्नमुख थे। परन्तु सनन्दन को खिन्न देखकर कारण पूछा ॥३४॥

मातुलस्याग्रहात्तस्य गेहे किंचिद्दिनस्थितिम् ।
शास्त्रचर्चासु तद्भङ्गं पुस्तस्याग्निनिवेशनम् ॥ ३५ ॥

भोजने विषदानं च सर्वमेव सविस्तरम् ।
निवेद्य गुरवे जातः शोकाक्रान्तः सनन्दनः ॥ ३६ ॥

मामा के आग्रह से कुछ दिन उनके घर में रहना, शास्त्र चर्चा में मामा का हारना, यात्रा में जाने पर पुस्तक को आग में जलाना, वाद में आने पर भोजन में विष देना आदि सभी बातों को विस्तारपूर्वक आचार्य के सामने निवेदन कर सनन्दन शोकाकुल होने लगे ॥३५-३६॥

अङ्ग कर्मविपाकोऽयं दुर्वारो मा खिदस्ततः ।
अयमर्थो मया प्रोक्तः सुरेशाय पुरैव हि ॥ ३७ ॥

आचार्य ने कहा—हे सनन्दन ! खेद मत करो। यह सब पूर्वकर्म का विपाक है। होने ही वाला था। यह बात मैंने सुरेश्वर को पहले ही बतायी थी।

त्वया शृङ्गगिरौ पूर्वं श्राविता पञ्चपादिका ।
तन्मे स्मृतिपथेऽद्यापि विद्यते तां लिख द्रुतम् ।। ३८ ।।

तुमने शृङ्गेरी में मुझे पंचपादिका सुनायी थी। आज भी मुझे वह याद है। तुम जलदी बैठ कर उसे लिखो ।।३८।।

पूर्वयैवानुपूर्व्या तामुपाचष्टे स्म देशिकः ।
महापुरुषधुर्येषु नैतच्चित्रं महर्षिषु ।। ३९ ।।

पहले वाली आनुपूर्वी से पूरी पंचपादिका को आचार्य ने बतला दिया। महापुरुषों में भी महान् महर्षियों में यह कोई आश्चर्य की बात नहीं है ।३९।।

अभूतिमनुमार्धाङ्गमभोगिपरिवारितम् ।
अपूर्वशंकरं वन्देऽकालाङ्कमविनायकम् ।। ४० ।।

कैलासवासी शंकर भूति = (विभूति = भस्म) सहित हैं। आचार्य शङ्कर भूति = (वैभव से) रहित हैं। कैलास शङ्कर उमाअर्धाङ्ग हैं। आचार्यशंकर अनुमा = (अनुमान) अर्धाङ्ग हैं। कैलासशंकर भोगी (सर्प) परिवारित हैं, आचार्य शंकर अभोगि ( = भोगरहित त्यागी) परिवारित हैं। कैलासशंकर काल (कण्ठ में काले रंग के) अंक वाले हैं आचार्य शंकर काल (मृत्यु) अंक रहित हैं। कैलास शंकर विनायक (गणेश) सहित हैं। आचार्य शंकर विनायक (वौद्धसिद्धान्त) रहित हैं। ऐसे अपूर्व आचार्य शंकर को मैं प्रणाम करता हूँ ।।४०।।

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।
मत्वा च सततं ध्येय एते दर्शनहेतवः ।। ४१ ।।

श्रुति वाक्यों से श्रवण, युक्तियों से मनन और ध्यान रूपी निदिध्यासन ये तीन आत्मदर्शन के हेतु हैं ।।४१।।

प्राधान्यं श्रवणस्यैव मननाद् ध्यानतोऽपि च ।
उत्पत्तावन्तरङ्गं हि ज्ञानस्य श्रवणं बुधाः ।। ४२ ।।

मनन और निदिध्यासन की अपेक्षा श्रवण की प्रधानता है। क्योंकि ज्ञानोत्पत्ति में श्रवण अन्तरङ्ग है ।।४२।।

प्रत्यक्षविस्मृते साक्षात्कारः श्रवणहेतुकः ।
दशमस्त्वमसीत्यादौ सर्वानुभवगोचरः ।। ४३ ।।

वस्तु प्रत्यक्ष हो किन्तु विस्मृत हो वहाँ साक्षात्कार का कारण श्रवण ही है। यह दशमस्त्वमसि इत्यादि में सर्वानुभव विषय है ॥४३॥

**एवं सिद्धेऽपि साक्षात्त्वकारणत्वे विधिर्ह्ययम्।**
**नियमाय भवेद् यद्वदवघातादिकर्मसु ॥ ४४ ॥**

इस प्रकार श्रवण की साक्षात्कारकारणता सिद्ध ही है। फिर भी श्रोतव्यः यह विधि है। वह नियमार्थ है। जैसे 'व्रीहीनवहन्ति' इत्यादि में अवघातनियम है।

**नन्वज्ञानं कथं ज्ञाने न प्रकाशे तमः क्वचित्।**
**न वा परस्पराध्यासः प्रकाशतमसोः खलु ॥ ४५ ॥**

ब्रह्म ज्ञानस्वरूप है। उसमें अज्ञान कैसे हो? क्या सूर्य पर अन्धकार सम्भव है? प्रकाश और अन्धकार का अन्योन्याध्यास भी कहीं देखने में नहीं आता। तब ज्ञानरूपी ब्रह्म का और अज्ञानरूपी जगत् का अन्योन्याध्यास भी कैसे हो ॥४५॥

**अत्रोच्यते यथोलूकः प्रकाशैकस्वरूपिणि।**
**घनान्धतमसाध्यासं धत्ते तद्वद्भवेदिह ॥ ४६ ॥**

उक्त प्रश्नका उत्तर यह है कि प्रकाशस्वरूप सूर्य में उल्लू अंधकार का अध्यास करता है। वैसे ब्रह्म में अज्ञानाध्यास सम्भव है ॥४६॥

**ज्ञातेऽज्ञातेऽपि नाध्यासो न ब्रह्मण्युपपद्यते।**
**निःसामान्यविशेषे चेन्ना,ऽहंप्रत्ययसत्त्वतः ॥ ४७ ॥**

ब्रह्म ज्ञात हो तो अध्यास संभव नहीं। अज्ञात में अध्यास होता नहीं। सामान्यरूप से ज्ञात और विशेषरूप से अज्ञात में अध्यास होता है। ब्रह्म में सामान्य विशेष तो है नहीं। उत्तर यह 'अहं' करके सामान्यतया ब्रह्म ज्ञात है। अखण्ड आनन्दरूप से अज्ञात है। अतः अध्यास सम्भव है ॥४७॥

**अप्रत्यक्षेऽपि चाध्यासः साक्षिभास्ये विहायसि।**
**बालैर्हि तलमालिन्यप्रभृतेः क्रियते यथा ॥ ४८ ॥**

अप्रत्यक्ष होने पर भी साक्षिभास्य होने मात्र से आकाश में तल मालिन्यादि का अध्यास अज्ञानी करते हैं। वैसे अप्रत्यक्ष होने पर भी स्वयंप्रकाश आत्मा में अध्यास सम्भव है ॥४८॥

इत्यादिनिजसिद्धान्तप्रतिपादनबन्धुराम् ।
श्रुतियुक्त्यादिबहुलजटिलां पञ्चपादिकाम् ।। ४९ ।।
परमानन्दभरितहृदयः प्राप्य तां मुदा ।
उदतिष्ठदतिष्ठच्चारोदीद् गायति नृत्यति ।। ५० ।।

इत्यादि पूर्वदर्शितसिद्धान्तप्रतिपादनपरक श्रुतियुक्तिसमन्वित पंचपादिका को प्राप्त कर परमानन्दमग्न सनन्दन उठने बैठने रोने नाचने जैसे लगे ।।४९-५०।।

श्रुत्वाचार्यं समायातं भूपतो राजशेखरः ।
आगत्य चरणाम्भोजे ननाम विदुषां वरः ।। ५१ ।।

आचार्य को आये सुनकर राजा राजशेखर आये और उनके चरणों में प्रणाम किया ।।५१।।

श्रुतपूर्वा मया ते या सुरम्या नाटकत्रयी ।
प्रथते किमिति प्रोक्तोऽनलदाहं जगाद सः ।। ५२ ।।

आचार्य ने पूछा कि मैंने आपके तीन नाटक पहले सुने थे। उनका लोगों में प्रचार हुआ या नहीं। राजशेखर ने कहा भगवन् ! प्रमाद में तीनों नाटक जल गये ।।५२।।

स्त्रियते सा मया सर्वं लिखेति कथितो नृपः ।
अलिखद्विस्मयाविष्टः सेवां स्वां प्रार्थयच्च सः ।। ५३ ।।

आचार्य ने कहा—मुझे तीनों नाटक याद हैं, तुम लिखो। राजा ने पुनः तीनों नाटक लिखे। लिखते वखत राजा के आश्चर्य का ठिकाना नहीं रहा। अन्त में प्रार्थना की कि भगवन् ! मेरे लिए योग्य सेवा फरमायें ।।५३।।

कालटिग्रामगाः शप्ता मया तद्वत्त्वयापि च ।
तैर्वर्त्तितव्यमधुनेत्याचार्यस्तं समादिशत् ।। ५४ ।।

आचार्य ने राजा को आदेश दिया कि मैंने कालटिग्रामवासी ब्राह्मणों को वेदविहीन होने का श्राप दिया है, वैसे ही तुम उनसे वरताव करो (द्रष्टव्य :—वे ही कालटिवासी ब्राह्मण तिरस्कृत होने से केरल में इधर उधर भटकते हुये अनेक मन्दिरों में मन्दिरवासी बने) ।।५४।।

सनन्दनस्तोषमजूजुषद् भृशं
निजश्रियं प्राप्य हि पञ्चपादिकाम् ।
मुदं परामायत राजशेखरो
यशस्करीं प्राप्य च नाटकत्रयीम् ।। ५५ ।।

सनन्दन अपनी शोभारूपी पंचपादिका को प्राप्त कर खुशी मनाने लगे और राजशेखर अपने यशोरूपी तीन नाटकों को प्राप्त कर आनन्द मनाने लगे ।।५५।।

शंकराचार्यचरिते जयमङ्गलगुम्फिते ।
सर्गः पञ्चदशः पञ्चपादिकोद्धारसंयुतः ।। १५ ।।

## अथ षोडशः सर्गः

अथ शिष्यैः सहस्रैश्च राज्ञा चैव सुधन्वना ।
दिशो विजेतुं प्रथमं प्रतस्थे सेतुबन्धनम् ।। १ ।।

इसके बाद आचार्य शंकरभगवत्पाद अद्वैतसिद्धान्तप्रसारार्थ हजारों शिष्यों और राजा सुधन्वा के साथ दिग्विजयार्थ प्रथम सेतुबन्ध की ओर प्रस्थान करते हैं ।।१।।

तत्रानार्याः समागत्य प्रत्यवारुन्धताखिलान् ।
शाक्तेन वाममार्गेण प्रत्यवास्थिषतापि च ।। २ ।।

वहां अनार्य शाक्तमतावलम्बियों ने उन्हें रास्ते में रोका और अपने शाक्तमत को प्रस्तुत किया ।।२।।

मद्यं मांसं च मीनं च मुद्रां मैथुनमेव च ।
मकारपञ्चकं धत्स्व कौलिकानां विमुक्तिदम् ।। ३ ।।

पंचमकार का सेवन करो। मद्य, मांस मछली, मुद्रा और मैथुन इन पंचमकार से कौलिकों को मोक्ष मिलता है ।।३।।

अन्यास्तु सकला विद्याः प्रकटा गणिका इव ।
इयं तु शांभवी विद्या गुप्ता कुलवधूरिव ।। ४ ।।

अन्य सभी विद्यायें सिर उघाड़े गणिका समान हैं। यह हमारी विद्या शांभवी विद्या गुप्त कुलवधूसदृश है ॥४॥

**कुलं शक्तिरिति प्रोक्तमकुलं शिव एव च ।**
**कुलेऽकुलस्य संयोगः कौलमित्यभिधीयते ॥ ५ ॥**

कुल शक्ति को कहते हैं। अकुल शिव को। कुल के साथ अकुल का संयोग ही कौल है ॥४॥

**मैवं मद्यं च मांसं च मीनं मुद्रां च मैथुनम् ।**
**मकारपञ्चकं भो भो योगिनां मुक्तिदायकम् ॥ ६ ॥**

आचार्य ने उत्तर दिया—हे शाक्तो ! मद्यादि पञ्चमकार कौलिकों को नहीं, योगियों को मुक्ति देने वाले हैं ॥६॥

**यदग्निमण्डलमभिनिश्च्योतत् सोममण्डलात् ।**
**अमृतं मदनात्सद्यं तदास्वाद्य कृती नरः ॥ ७ ॥**

चन्द्रमण्डल से नाभिस्थित अग्निमण्डल की ओर जो अमृत गिरता है वह मद प्रीतिजनक होने से मद्य है। उसके आस्वादन से मनुष्य कृतार्थ होता है, न कि बाह्य मद्य से ॥७॥

**खेचर्या मांसजिह्वाया आगलान्तप्रवेशनम् ।**
**मांसभुक्तिरिति प्राहुर्मद्यपानं यया सह ॥ ८ ॥**

जीभ केवल मांसात्मक है। खेचरी मुद्रा से गले तक जीभ को ले जाना ही मांसभक्षण है। उसी के साथ पूर्वोक्त मद्यपान है ॥८॥

**गङ्गायमुनयोर्मध्ये चरन्तं प्राणसंज्ञितम् ।**
**मत्स्यं तत्पूरयेदन्तस्तन्मीनादनमुच्यते ॥ ९ ॥**

गङ्गा और यमुना (इडा और पिंगला) के मध्य में जो प्राण चलते हैं वे मत्स्य हैं। उनको अन्दर पूरण करना मत्स्य-भक्षण है ॥९॥

**समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।**
**प्रेक्षयन्नासिकाग्रं स्वं मुद्रायुक्त इतीर्यते ॥ १० ॥**

शरीर, सिर और ग्रीवा सम रखकर नासिकाग्रभाग को देखते हुए स्थिर रहना ही मुद्रा है ॥१०॥

**कुलकुण्डलिनी शक्तिर्देहिनो देहधारिणी ।**
**तया शिवस्य संयोगो मैथुनं परिकीर्त्तितम् ॥ ११ ॥**

मूलाधार स्थित, देह को धारण करनेवाली, कुण्डलिनी शक्ति का सहस्रारस्थ शिव के साथ संयोजन ही मैथुन है, न कि वाह्य मैथुन ॥११॥

मद्यं मांसं च मीनं च मुद्रा मैथुनमेव च।
मकारपञ्चकं प्राहुर्ज्ञानिनां च विमुक्तिदम् ॥ १२ ॥

मकारपञ्चक ज्ञानियों को भी मोक्ष देता है ॥१२॥

यदुक्तं परमं ब्रह्म निर्विकारं निरञ्जनम्।
तस्मिन् प्रमदनं ज्ञानं तन्मद्यं परिकीर्त्तितम् ॥ १३ ॥

निर्विकार निरंजन ब्रह्म में प्रमदन = हर्षित करने वाला ज्ञान ही मद्य है ॥१३॥

माशब्दाद्रसना ज्ञेया तदंशं रसितं तथा।
सदा योऽश्नात्तमेवाह शंकरो मांससाधकम् ॥ १४ ॥

मा = रसना का अंस = अंश = रस को जो जीते वहीं मांससाधक है। ऐसा शिवजी ने पावर्ती को कहा ॥१४॥

मां स्यतः स्वस्वरूपाद्यौ सुखदुःखात्मकौ प्रिये।
तौ मत्स्यौ भक्षयेदित्यभ्याहेशो मत्स्यसाधकम् ॥ १५ ॥

जो आत्मस्वरूप से प्रच्युत कराये वे सुखदुःख ही मत्स्य हैं (मत् = मुझे स्य = गिराने वाले) उनको जीतना हीं मत्स्यादन है ॥१५॥

सत्सङ्गेन भवेन्मुक्तिरसत्सङ्गेन बन्धनम्।
सत्सङ्गमुद्रणं यत्तु सा मुद्रा परिकीर्त्तिता ॥ १६ ॥

सत्संग से मुक्ति और असत्संग से वन्धन होता है। सत्सङ्ग की छाप ही मुद्रा है ॥१६॥

यथा स्त्रियं परिष्वज्य न बाह्यं वेद नान्तरम्।
इति श्रुतेर्जीवपरयोगो मैथुनमीर्यते ॥ १७ ॥

श्रुति में जीवात्मा परमात्मा के योग को स्त्री पुरुष संयोग की उपमा दी है, अतः वही मैथुन है ॥१७॥

इत्थं शाक्तानानार्यान् स जित्वा पाण्ड्येषु संचरन्।
चोलेषु द्रविडेष्वेवं श्रौतं धर्ममवर्त्तयत् ॥ १८ ॥

इस प्रकार अनार्य शाक्तों को जीतकर पाण्ड्य, चौल और द्रविड़ देशों में वैदिकधर्म का आचार्य ने प्रवर्तन किया ॥१८॥

ततः काञ्चीमुपागत्य देवागारं विधाप्य च ।
श्रौतधर्मेण देव्या स सपर्यां पर्यकल्पयत् ॥ १९ ॥

आचार्य ने काँची में आकर वहाँ देवी का मन्दिर बनवाया और वैदिक मार्ग से पूजा चालू करायी ॥१९॥

आन्ध्रान् विदर्भानपि च परिभ्रम्य महामनाः ।
जित्वा भैरवतन्त्रस्थान् श्रौतं धर्ममतिष्ठिपत् ॥ २० ॥

वहाँ से आन्ध्र तथा विदर्भ में भ्रमण कर भैरव तन्त्र वालों को जीता और वैदिक धर्म की प्रतिष्ठा की ॥२०॥

ततः कर्णाटकं प्रागात्कापालिककुलावृतम् ।
क्रकचो नृकरोटीभृच्चिताभस्मधरोऽभ्यगात् ॥ २१ ॥

वहाँ से पश्चिम की ओर कर्नाटक में आये जहाँ कापालिकों का झुंड था। मनुष्य की खोपड़ी एवं चिताभस्म धारण कर वहाँ क्रकच पहूंच गया ॥२१॥

सहस्रशिष्यसहितः सायुधोऽभ्येत्य देशिकम् ।
रुरोध तत्र शतशो निहताश्च सुधन्वना ॥ २२ ॥

वह क्रकच हजारों शिष्यों के साथ हाथ में शस्त्र लेकर आया और आचार्य को रोका। शस्त्र प्रयोग में सुधन्वा राजा ने सैकड़ों को मार गिराया ॥२२॥

क्रुद्धस्तदा कपाली स प्रभावं पश्य मेऽधुना ।
कदाशयेति प्रवदन् दध्यौ भैरवमुग्रधीः ॥ २३ ॥

उस समय क्रुद्ध होकर कपाली ने कहा– अरे दुष्टाशय ! मेरा प्रभाव तुम अभी देखोगे। इतना कहकर उग्रमति कापालिक ने भैरव का ध्यान किया ॥२३॥

महाकपाली तत्राविरासीद्विकटरूपधृक् ।
तमाह क्रकचो व्यग्रो जहि भो स्वजनद्रुहम् ॥ २४ ॥

महाकपाली भैरव प्रकट हो गये। उनका रूप वड़ा विकट था। क्रकच व्यग्र होकर बोला आप स्वजन द्रोही को मार डालो। (महाभैरव का जन = भक्त क्रकच, उसके द्रोही शंकराचार्य को मारो यह उसका अर्थ था) ॥२४॥

मम स्वरूपभूतोऽयं शंकरः स्वजनो मम।
तद्द्रोही तु त्वमेवासीत्यच्छिनत्तच्छिरो हरः ॥ २५ ॥

शंकर (आचार्य) तो मेरा ही स्वरूप है। अतः स्वजन हुआ। उसका द्रोही तुम हो। अतः तुम्हारे वचनानुसार स्वजनद्रोही को मारता हूँ। ऐसा कहकर क्रकच का ही सिर भैरव ने काट गिराया ॥२५॥

क्रकचे निहते तस्मिन् सर्वे लोकाः शर्म ययुः।
तत्र धर्मं प्रतिष्ठाप्य लोकानिदमुपादिशत् ॥ २६ ॥

क्रकच के मारे जाने पर वहाँ के लोगों को बड़ी शान्ति अनुभव होने लगी। आचार्य ने वहाँ धर्मप्रतिष्ठा कराकर सब लोगों को यह उपदेश दिया ॥२६॥

निरावरणविज्ञानस्वरूपो हि स्वयं हरः।
तादृशज्ञानसंपत्तिः स्याद्दिगम्बरता नृणाम् ॥ २७ ॥

शंकर आवरण रहित ज्ञानस्वरूप हैं। यही शंकर की दिगम्बरता है। वैसा ज्ञान प्राप्त करना यह मनुष्यों की दिगंबरता है। वस्त्रत्याग मात्र से कोई दिगम्बर नहीं होता ॥२७॥

ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते हि यत्।
तद्भस्मोद्धूलयेद्देहे समत्वाख्यं हि वस्तुषु ॥ २८ ॥

गीता में जो ज्ञानाग्नि समस्त कर्मों को भस्म कर देती है बताया वह भस्म है समता। उसका धारण ही भस्म धारण है। बाह्य भस्मधारण प्रतीक मात्र है ॥२८॥

शान्तिवैराग्यबोधाख्यैस्त्रिभिरग्रैस्तरस्विभिः।
त्रिगुणं त्रिपुरं हन्यात् त्रिशूलेन त्रिवेददृक् ॥ २९ ॥

शान्ति वैराग्य और बोध ये तीन नोक हैं। वेदत्रय दृष्टि त्रिशूल है। उससे त्रिगुणरूपी त्रिपुरासुर को मारना चाहिए ॥२९॥

महाश्मशानः संसारो जन्ममृत्युनिरन्तरः।
इति पश्यन् वसेत्सोऽयं श्मशाने वास उच्यते ॥ ३० ॥

संसार में निरन्तर मृत्यु होती है। मेरी मृत्यु भी होगी। संसार इसलिये महाश्मशान है। ऐसा समझ कर रहना ही श्मशानवास है ॥३०॥

**कं सुखं पालयेद्यस्तु स कपाल उदीर्यते ।**
**स विरागश्च बोधश्च न पुनर्नृकरोटिका ॥ ३१ ॥**

कं का अर्थ है सुख आनन्द। उसका पालन वैराग्य और बोध से होता है। अतः वे ही कपाल हैं। उनका धारण करो न कि खोपड़ी का ॥३१॥

**इत्थं तत्त्वं समादिश्य ततः पश्चिममम्बुधिम् ।**
**प्राप्य गोकर्णमागत्य शिवं तुष्टाव देशिकः ॥ ३२ ॥**

इस प्रकार लोगों को तत्वोपदेश कर आचार्य ने वहाँ से पश्चिम समुद्रतीरस्थ गोकर्ण आकर वहाँ शंकर की स्तुति की ॥३२॥

**शिवानन्दलहर्यादिस्तुतिभिः संस्तुतो हरः ।**
**आशिषः प्रादिशत्तस्मै दिशां विजयहेतवे ॥ ३३ ॥**

शिवानन्दलहरी आदि से संस्तुत शंकर भगवान ने दिग्विजयार्थ आशीर्वाद दिया ॥३३॥

**तत्राचार्यमुपायातं हरदत्ताभिधो बुधः ।**
**नीलकण्ठं निजगुरुमसूयालुर्व्यजिज्ञपत् ॥ ३४ ॥**

हरदत्त नामक असूयालु पण्डित ने अपने गुरु नीलकण्ठ को आचार्य के वहाँ आने की खबर दी ॥३४॥

**विवादायोदतिष्ठत् स शिवतत्परभाष्यकृत् ।**
**व्यासात्पूर्वं कपिलवत्स्वपक्षं चोदतिष्ठिपत् ॥ ३५ ॥**

नीलकण्ठ विवाद के लिए खड़ा हो गया। वह ब्रह्म सूत्रों पर शिव परक भाष्य लिखने वाला था। व्यास से पूर्व कपिल के समान आचार्य शंकर के सामने अपना पक्ष उसने उठाया ॥३५॥

**सुरेश्वरं विवादाय संनद्धमपवार्य सः ।**
**प्राह त्वत्कौशलं वेद्मि गुरुस्ते प्रब्रवीतु माम् ॥ ३६ ॥**

सुरेश्वराचार्य विवाद के लिये तैयार हो गये तो नीलकण्ठ ने कहा कि तुम्हारी कुशलता मैं जानता हूँ। तुम्हारे गुरु ही मेरे साथ शास्त्रार्थ कर लें ॥३६॥

ऐक्यं न जीवपरयोरभेदे हेत्वभावतः ।
न वाच्यं प्रतिबिम्बत्वादभिन्नो जीव इत्यपि ।। ३७ ।।
भिन्नो हि प्रतिविम्बः स्याद्विम्बतुल्यो हि स स्मृतः ।
प्रतिबिम्बे विनष्टेऽपि बिम्बस्तिष्ठति निश्चलः ।। ३८ ।।

नीलकण्ठ :—जीव और ईश्वर की एकता में कोई हेतु नहीं है। ईश्वर का प्रतिविम्ब जीव है। इसीलिए एक है कहो तो भी ठीक नहीं। बिम्ब से प्रतिविम्ब भिन्न ही होता है। वह बिम्बतुल्य होता है, बिम्ब ही नहीं। प्रतिविम्ब नष्ट होता है तो भी बिम्ब रह जाता है। दोनों की एकता हो तो प्रतिबिम्ब नष्ट हुआ तो बिम्ब भी नष्ट हो जाता ।।३७-३८।।

विरुद्धे मौढ्यसार्वज्ञे सर्वेषामेव संमते ।
धर्मभेदाद्ध्रुवेद्धर्मिभेदश्चेति विनिश्चितम् ।। ३९ ।।

जीव में मूढ़ता है। ईश्वर में सर्वज्ञता है। दोनों विरुद्धधर्म हैं। धर्म भेद से धर्मिभेद भी निश्चित है ।।३९।।

न धर्मबाधाद्धर्म्यैक्यं संपद्येतेति सांप्रतम् ।
अश्वत्वगोत्वबाधेन गवाश्वैक्यप्रसङ्गतः ।। ४० ।।

धर्म बाधित होने पर धर्मी की एकता होगी यह कहना भी नहीं बनेगा। क्या अश्वत्व और गोत्व का बाध कर अश्व और गाय की एकता सिद्ध की जा सकती है ? ।।४०।।

प्रात्यक्षिकं च जगतः सत्यत्वं दुरपोहनम् ।
इत्यादिभिर्नीलकण्ठो युक्तिभिः प्रत्यवास्थित ।। ४१ ।।

जगत् प्रत्यक्षतः सत्य है। उसका अस्वीकार नहीं किया जा सकता। इत्यादि युक्तियों से नीलकण्ठ ने शास्त्रार्थ शुरू किया ।।४१।।

सोऽयं पुरुष इत्यादौ तदेतद्देशकालताम् ।
विरुद्धां किं न संत्यज्य ह्यखण्डं बुध्यते बुधैः ।। ४२ ।।

आचार्य ने कहा—सोऽयं पुरुषः यहां विरुद्ध तत्कालदेश और एतत्काल-देश को छोड़कर अखण्ड बोध क्या नहीं होता ? ।।४२।।

गवाश्वैक्यप्रसक्तिर्या दर्शिता सा न युज्यते ।
तदैक्यबोधकं किंचित्तत्त्वमस्यादिवन्न हि ।। ४३ ।।

गौ और अश्व की एकता की प्रसक्ति जो बतायी वह अयुक्त है। क्योंकि तत्त्वमसि के समान गौरश्वोऽस्ति ऐसा कोई ऐक्यबोधकवचन नहीं है ॥४३॥

**स्वाप्नार्थः स्वप्नसमये सत्य एव प्रतीयते ।**
**प्रतीयतां ततः किं तत् सत्यमित्यभ्युपेयते ॥ ४४ ॥**

स्वप्न समय में स्वाप्नार्थ सत्य ही दीखता है। तो क्या वह सत्य हो जायेगा ? ॥४४॥

**इति सिद्धान्तमाकर्ण्य नीलकण्ठः समासतः ।**
**पुनरप्यब्रवीद् द्वैतसत्यत्वाभिनिविष्टधीः ॥ ४५ ॥**

संक्षेप से सिद्धान्त सुनने पर भी द्वैतसत्यत्वाभिनिवेश से नीलकण्ठ ने फिर से कहा ॥४५॥

**जीवेशैक्येऽखिलानां च जीवानामेकता भवेत् ।**
**जन्ममृत्युक्रियादुःखसुखभेदः कथं तदा ॥ ४६ ॥**

जीव और ईश्वर की एकता हो तो सब जीवों की भी एकता होगी। तब कोई जनमा, कोई मरा, कोई सक्रिय, कोई निष्क्रय, कोई सुखी, कोई दुःखी यह विलक्षणता कैसे ? ॥४६॥

**मैवं जन्मसृती किं नु मनुते स्वात्मनो भवान् ।**
**सुखादयो मनोधर्माः श्रुत्यैव प्रतिपादिताः ॥ ४७ ॥**

आचार्यः—तो क्या आप जन्म मरणादि को आत्मा का धर्म मानते हैं? (वह स्वसिद्धान्त विरुद्ध है) सुखदुःखादि भी मन के धर्म हैं ऐसा श्रुति ने ही बताया है ॥ ४७ ॥

**एवं पुनः शरीराणां मनसां च भिदा त्वया ।**
**साधिताऽर्थान्तरं तेन भवतोऽत्र प्रसज्यते ॥ ४८ ॥**

उस युक्ति से आपने शरीर और मन का भेद साधा। यह तो अर्थान्तर दोष है ॥ ४८ ॥

**सुखादिकं चेन्मनसो भोक्तृ स्याद्भवतो मनः ।**
**कर्त्ता तु चेतनश्चेति भवेद् व्यधिकृतिस्तयोः ॥ ४९ ॥**

नी०—सुखादि मन में है, इसका अर्थ हुआ मन भोक्ता है। और कर्ता है चेतन आत्मा। तब कर्तृत्व और भोक्तृत्व व्यधिकरण हो जायेंगे। परन्तु वह ठीक नहीं। कर्त्ता ही भोक्ता होता है, अन्य नहीं ॥ ४९ ॥

**मैवं कर्त्तृत्वभोक्तृत्वे द्वे अप्येव मनोगते ।**
**ते च चैतन्यसांनिध्यादयसो दाहकत्ववत् ॥ ५० ॥**

आचार्यः—आपका कथन ठीक नहीं । कर्त्तृत्व और भोक्तृत्व दोनों ही मन में ही हैं । चेतन के सांनिध्य से मन चेतन सा होता है । जैसे अग्नि-सांनिध्य से लोहा अग्नि जैसा होता है ॥ ५० ॥

**ननु विश्वस्य मिथ्यात्वे कर्मकण्डोऽसदर्थकः ।**
**भवेन्मैवं यतः सत्यं ब्रूमः सांव्यवहारिकम् ॥ ५१ ॥**

नी०:—यदि विश्वमिथ्या हो तो कर्मकाण्ड असत्यार्थक होगा । आ०—व्यावहारिक सत्य मानने से उक्त दोष नहीं है ॥ ५१ ॥

**नन्वेवं कपिलादीनां भवेद् भेदवचो मृषा ।**
**भवेच्छ्रुतिविरोधे स्यादनपेक्षा स्मृतिर्यतः ॥ ५२ ॥**

नी०:—आपके मत में कपिलादि मुनियों का भेद सिद्धान्त झूठा पड़ जायेगा । आ०—पड़े, श्रुतिविरोध होने पर स्मृति अनपेक्षणीय होती ही है ॥ ५२ ॥

**ननु दुःखविनाशस्य पुमर्थत्वमुपेयते ।**
**द्वैतं तिष्ठतु मा वा का मृषात्वाभिनिवेशिता ॥ ५३ ॥**

नी०:—दुःखनाश ही पुरुषार्थ है । अब द्वैत सत्य हो या असत्य । इसमें आपको क्या लेना देना है ? ॥ ५३ ॥

**मैवं श्रुतिर्निगदति द्वितीयाद्वै भयं भवेत् ।**
**ततश्च द्वैतमिथ्यात्वमुपगम्यं मनोषिभिः ॥ ५४ ॥**

आ०—श्रुति कहती है—द्वितीय से भय होता है । अतः द्वैतमिथ्यात्व माने विना सर्वदुःखनाश संभव नहीं है ॥ ५४ ॥

**न वाऽचेतनदुःखान्तः पुमर्थो भवितुं क्षमः ।**
**प्रस्तरादिसमत्वं हि कः पुमर्थं वदेत्सुधीः ॥ ५५ ॥**

दुःखान्त होकर अचेतन पड़ा रहे यह पुरुषार्थ नहीं हो सकता । पत्थर के बराबर पड़ा रहना कौन स्वीकार कर सकता है । कैसा वह पुरुषार्थ है ? ॥ ५५ ॥

तस्माच्चेतनता मोक्षे तत्र द्वैते भयं ध्रुवम् ।
चेतनस्य किलानन्दः पुमर्थः सर्वसम्मतः ॥ ५६ ॥

इसलिये मोक्ष में चेतनत्ता मान्य है। फिर वहाँ द्वैत हो तो भय अवश्यंभावी है। चेतन का आनन्द ही परम पुरुषार्थ है ॥ ५६ ॥

इत्थं भग्ने नीलकण्ठे बिभ्युश्चोदयनादयः ।
सर्वेऽपि भगवत्पादपादमेवोपशिश्रियुः ॥ ५७ ॥

इस प्रकार शास्त्रार्थ में नीलकण्ठ निरुत्तर हो गया तो उदयनादि सभी घबरा गये और भगवत्पाद के चरणाश्रित हो गये [द्रष्टव्यः—यहाँ का नीलकण्ठ एवं उदयनादि प्रसिद्ध नीलकण्ठ उदयनादि से भिन्न है। क्योंकि प्रसिद्ध नीलकण्ठादि आचार्य के बहुत बाद में हुए हैं। एक नाम के अनेक व्यक्ति का होना आज भी एक काल में ही देखने में आता है। जो पराजित हो गये वे आचार्याश्रित हो जाते थे। अतएव आज उनका द्वैतपरक ग्रन्थ उपलब्ध न होता हो तो वह भी कोई खास बात नहीं है ] ॥ ५७ ॥

महाराष्ट्रेष्वथागत्य वाममार्गपरायणान् ।
विजित्य श्रौतमार्गेण तुष्टुवे विट्ठलेश्वरम् ॥ ५८ ॥

वहाँ से आचार्य महाराष्ट्र में आये और वाम मार्ग परायणों को जीत कर वैदिक धर्म का प्रतिष्ठापन किया और "महायोगिपीठे तटे भीमरथ्याः" इत्यादि श्लोकों से गिट्ठल भगवान की स्तुति की ॥ ५८ ॥

गुरुः शृङ्गवेरे प्रतिष्ठाप्य भव्यं
मठं दक्षिणाशां विजित्यापि सर्वाम् ।
प्रतस्थे प्रतीचीं विजेतुं विजेता
सशिष्यो मुदा भाष्यकारः सभूपः ॥ ५९ ॥

दक्षिण देश को जीत लिया। मध्य में ही शृङ्गेरी मठ का स्थापन हुआ। वहाँ से फिर विजयशील भाष्यकार पश्चिम दिशा को जीतने के लिये शिष्यों के और सुधन्वा राजा के साथ प्रस्थान करते हैं ॥ ५९ ॥

शंकराचार्यचरिते जयमङ्गलगुम्फिते ।
षोडशो निरगात्सर्गो दक्षिणाशाजयान्वितः ॥ १६ ॥

## अथ सप्तदशः सर्गः

सौराष्ट्रेषु परिभ्रम्य ययौ द्वारावतीं गुरुः ।
पाञ्चरात्रागमा यत्र भग्ना देशिकसूरिणा ॥ १ ॥

आचार्य सौराष्ट्र में परिभ्रमण कर द्वारिका पहुँचे जहां पाञ्चरात्रागम वालों को परास्त किया ॥१॥

चतुर्व्यूहे भवेदाद्यो वासुदेवः स ईश्वरः ।
संकर्षणस्ततो जीवः प्रद्युम्नश्च ततो मनः ॥ २ ॥
ततोऽनिरुद्धोऽहंकार उपास्याः पाञ्चरात्रगाः ।
वेदैरप्राप्य हि श्रेयः शाण्डिल्यो यदधीतवान् ॥ ३ ॥

पाञ्चरात्र में बताया है कि चार व्यूह है। प्रथम वासुदेव है, वही ईश्वर है। उससे संकर्षण हुआ। वही जीव है। उससे प्रद्युम्न हुआ, वही मन है। उससे अनिरुद्ध हुआ। वही अहंकार है। इन चारों की उपासना करनी चाहिये। वेदों से जब श्रेय की प्राप्ति नहीं हुई तब शाण्डिल्य ने पाञ्चरात्र का अध्ययन किया ॥२-३॥

तन्न जीवासमुत्पत्तेः कर्त्तुश्च करणं न सत् ।
एकेनैव गतार्थत्वात्सर्वेषां नेशता भवेत् ॥ ४ ॥

उक्त मत अयुक्त है। क्योंकि जीव की उत्पत्ति नहीं हो सकती। पूर्वकृत कर्म के बिना उत्पत्ति सुखदुःखादि मानेंगे तो कृतहानि आदि दोष होंगे। जीव कर्त्ता है मन कारण है। कर्त्ता से कारण उत्पन्न होते देखने में नहीं आया। यदि कहें कि ये चारों ईश्वर ही हैं तो वह भी अयुक्त है। कारण जब एक ही ईश्वर से सर्वकार्य सिद्ध हो सकता है, तब चार ईश्वर मानना निरर्थक और युक्तिविपरीत भी है ॥४॥

संकर्षणो हरेर्भ्राता स्वावतारः पुराणतः ।
स चेज्जीवो भवेज्जीवपरैक्यं साधितं त्वया ॥ ५ ॥

और पुराणों के अनुसार संकर्षण हरि के भाई हैं, हरि के ही अवतार हैं। वही यदि जीव है तो जीवेश्वर एकता को ही आपने सिद्ध किया ॥५॥

वासुदेवः परं ब्रह्म संकर्षण इतीश्वरः ।
हिरण्यगर्भः प्रद्युम्नोऽनिरुद्धश्च विराडिति ।। ६ ।।

वस्तुतः चतुर्व्यूह रहस्य यही है कि वासुदेव परब्रह्म का नाम है। संकर्षण ईश्वर है। प्रद्युम्न हिरण्यगर्भ है और अनिरुद्ध विराट् को कहते हैं ॥६॥

शं भद्रं ब्रह्म खं चाहुर्धीवृत्ति तेन मुद्रयेत् ।
ब्रह्मशङ्खाप्तिहेतुः स न त्वचाज्वालनं हि तत् ।। ७ ।।

शङ्ख शब्द का अर्थ है शं = कल्याणरूपी खं = ब्रह्म। उससे बुद्धि वृति को मुद्रित करें। ब्रह्मरूपी शंख की उससे प्राप्ति होती है। त्वचा जलाना मुद्रण का अर्थ नहीं है ॥७॥

ब्रह्माकारितवृत्तेश्चाऽऽवर्त्तनं चक्रवत्सदा ।
ब्रह्मदर्शनहेतुत्वात् सुदर्शनमितीर्यते ।। ८ ।।

ब्रह्माकार वृत्ति का चक्र के समान बार बार आवर्तन करना चाहिये। वह ब्रह्म दर्शन का कारण होने से सुदर्शन कहलाता है ॥८॥

इत्थं विकृतसिद्धान्तं परिष्कार्य महामनाः ।
तत उज्जयिनीं प्रागाच्छिष्यव्रातसमन्वितः ।। ९ ।।

इस प्रकार पाञ्चरात्रों के विकृत सिद्धान्त का परिष्कार कर शिष्यों के साथ आचार्य उज्जैन पहुँच गये ॥९॥

महाकालेश्वरं तत्र प्रणम्य जगदीश्वरम् ।
तुष्टाव बहुलार्थाभिः स्तुतिभिर्देशिकोत्तमः ।। १० ।।

उज्जैन में महाकालेश्वर को प्रणाम कर गहन अर्थ युक्त स्तुतियों से आचार्य ने शंकर की स्तुति की ॥१०॥

अद्वैतदर्शनाचार्यं विज्ञाय समुपागतम् ।
विवादायागमत्तत्र पण्डितो भट्टभास्करः।। ११ ।।

अद्वैतदर्शन के आचार्य आए हैं सुनकर पण्डित भट्टभास्कर विवाद के लिये आ गये ॥११॥

ननु मायाप्रयुक्तोऽयं भेद ईश्वरजीवयोः ।
इति ब्रूषे तदा मायाश्रयो न कतरोऽनयोः ।। १२ ।।

**न वा ब्रह्माश्रया सा यन्निःसङ्गं ब्रह्म भण्यते ।**
**तस्मान्मायाकृतो भेद इत्येतद् दुर्नयं वचः ।। १३ ।।**

भट्टभास्कर :—ईश्वर और जीव का भेद मायाप्रयुक्त है। तव इनमें एक भी माया का आश्रय नहीं होगा। क्योंकि माया से जीव और ईश्वर हुए। ब्रह्म भी माया का आश्रय नहीं। क्योंकि ब्रह्म असंग है। उसमें अज्ञान का संग किस प्रकार होगा ? अतः मायाकृत भेद है यह न्यायशून्य कथनमात्र है ।।१२-१३।।

**मैवं लोके दर्पणो हि मुखात्तत्प्रतिबिम्बभित् ।**
**मुखाश्रितोऽपि चाभासपक्षपाती स दृश्यते ।। १४ ।।**
**एवमीशाश्रिता माया जीवमीशाद् भनत्ति सा ।**
**स्वधर्माधायिनी जीवपक्षपातिन्यपीरिता ।। १५ ।।**

आचार्यः—लोक में यह देखा गया है कि दर्पण बिम्ब और प्रतिबिम्ब का भेद करता है। मुखाश्रित होने पर भी प्रतिबिम्बपक्षपाती होता है। जैसे कि माया ईश्वर और जीव का भेद करती है। और ईश्वराश्रित होने पर भी अपने धर्मों को जीव में अधान करने से जीवपक्षपातिनी होती है ।।१४-१५।।

**कल्पिता किल मायेयं तस्याः सङ्गोऽपि कल्पितः ।**
**न हि कल्पितसङ्गेन ससङ्गत्वं मरौ कवत् ।। १६ ।।**

माया कल्पित होने के कारण उसका सङ्ग भी कल्पित है। कल्पित सङ्ग होने से कोई ससङ्ग नहीं होता। जैसे कि कल्पित जल सङ्ग होने से मरुभूमि गीली नहीं होती ।।१६।।

**नन्वज्ञानात्मिका माया कथं ब्रह्मणि चेतने ।**
**न हि सूर्ये भवेदन्धतमसं तद्विरोधतः ।। १७ ।।**

भ०—अज्ञानरूपी माया ब्रह्म में कैसे ? वह चेतन है। जैसे सूर्य पर अन्धकार नहीं होता। क्योंकि वह अन्धकार का बिरोधी है ।।१७।।

**मैवं त्वदुक्तं नो जानाम्यहमज्ञ इतीदृशम् ।**
**ज्ञानेऽप्यज्ञानसद्भावप्रत्यक्षः सर्वसंगतः ।। १८ ।।**

आ०—तुम्हारा कथित मैं नहीं जानता, मैं अज्ञानी हूँ, ऐसा सबको

अनुभव होता है। मैं अज्ञ हूँ जब इतना जाना तो सर्वथा अज्ञ कैसा ? इस से सिद्ध होता है कि ज्ञान में भी अज्ञान रह सकता है ॥१८॥

नन्वज्ञानं कल्पितं चेत्स्वेनाज्ञानान्तरेण वा ।
आद्ये त्वात्माश्रयस्ते स्यादन्त्ये स्यादनवस्थितिः ॥ १९ ॥

भ०—यदि अज्ञान कल्पित है तो स्वयं से कल्पित है या दूसरे अज्ञान से। प्रथम में आत्माश्रय, और द्वितीय में अनवस्था दोष होगा ॥१९॥

तदसत्कल्पितत्वेनानादिसिद्धं तदिष्यते ।
कल्पितत्वं किल ज्ञाननिवर्त्यत्वं हि सम्मतम् ॥ २० ॥

आ०—कल्पित आकार से अज्ञान अनादि सिद्ध है। कल्पिताकार है—ज्ञाननिवर्त्यता ॥२०॥

स्वतः पूतं जलं गाङ्गमपूतं श्वामिषं स्वतः ।
स्वतः सिद्धं परं ब्रह्म स्वतोऽज्ञानं च कल्पितम् ॥ २१ ॥

गङ्गाजल स्वतः पवित्र है, शुनकमांस स्वतः अपवित्र है, परब्रह्म स्वतः सिद्ध है। अज्ञान स्वतः कल्पित है ॥२१॥

नन्वज्ञोऽहमिति प्रोक्तेर्जीवोऽज्ञानाश्रयः स्थितः ।
अज्ञानाश्रयता नैव ब्रह्मणो युज्यते ततः ॥ २२ ॥

भ०—मैं अज्ञ हूँ इस अनुभव से जीव ही अज्ञानाश्रय सिद्ध होता है न कि ब्रह्म ॥२२॥

मैवं सामान्यचिन्निष्ठमज्ञानं तेन साधितम् ।
विशेषरूपं जीवस्य तेनाच्छादितमीक्ष्यते ॥ २३ ॥

आ०—अहमज्ञ से अज्ञान सामान्यचिन्निष्ठ है इतना ही बतलाना है। जीव के विशेषरूप का उससे आच्छादन देखने में आ रहा है ॥२३॥

ननु ब्रह्मणि चेत्तत्स्यादज्ञानि ब्रह्म ते भवेत् ।
नाज्ञानि ब्रह्म केनापि तान्त्रिकेणोपगम्यते ॥ २४ ॥

भ०—ब्रह्म में यदि अज्ञान हो तो ब्रह्म अज्ञानी है यह सिद्ध होगा। परन्तु कोई भी दार्शनिक ब्रह्म को अज्ञानी नहीं मानता ॥२४॥

नाऽऽच्छादनाख्यसम्बन्धयोगेनाज्ञानमन्वयन् ।
जीवोऽज्ञान्युच्यते लोकैर्न ब्रह्माज्ञानि भण्यते ॥ २५ ॥

आ०—आच्छादन सम्बन्ध योग से जीव का ही अज्ञान से अन्वय है। अतः जीव को अज्ञानी कहा जाता है, ब्रह्म को नहीं।।२५।।

**अश्वस्थे प्रतिपक्षिण्यप्यश्वो न प्रतिपक्षिमान् ।**
**विरोधाह्वयसम्बन्धाद्राजादिर्हि तथाविधः ।। २६ ।।**

अश्वपर शत्रु बैठा है लेकिन अश्व सशत्रु नहीं होता। किन्तु प्रतिपक्षी राजा स-शत्रु होता है। सशत्रुता में शत्रु का संयोग नहीं किन्तु विरोध संबंध संसर्ग होता है ।।२६।।

**ननु जीवाश्रितं ज्ञानमज्ञानं ब्रह्मगं कथम् ।**
**नाशयेत्तेन चाज्ञानं मन्तव्यं जीवगं त्वया ।। २७ ।।**

भ०—ज्ञान जीव में होता है। वह ब्रह्म स्थित अज्ञान को कैसे दूर करेगा ? जहाँ ज्ञान है वहीं पर नाश्य अज्ञान माना जाना चाहिये ।।२७।।

**मैवं वृत्तिगतं ब्रह्मज्ञानमित्युच्यते बुधैः ।**
**अज्ञानं हन्ति तद् यद्वन्मण्यारूढो रविस्तृणम् ।। २८ ।।**

आ०—अखण्डाकारवृत्तिगत ब्रह्म ही ज्ञान है। वह अज्ञान को नष्ट करता है। जैसे सूर्यकान्तमणि पर आरूढ़ सूर्यतेज तृण को जलाता है। आशय यह कि ब्रह्म ही ज्ञानस्वरूप होने से स्वगत अज्ञान को आसानी से नष्ट कर सकता है। उसमें वैयधिकरण्य प्रयुक्त दोष नहीं हो सकता। परंतु वृत्त्यभिव्यक्त ही अज्ञाननाशक है। इसलिए पहले से ही क्यों नहीं नष्ट किया यह प्रश्न भी नहीं उठता। जैसे घटावच्छिन्नचैतन्यगत अज्ञान को घटाकार-वृत्त्यभिव्यक्त चैतन्य ही नष्ट करता है घटचैतन्यसामान्य नहीं ।।२८।।

**नन्वज्ञानं सुषुप्तौ न सत्संपत्तिवशात्तदा ।**
**भवेत् पुनः कुतोऽज्ञानं जीवेश्वरविभाजकम् ।। २९ ।।**

भ०—सुषुप्ति में जीव सत् में मिल जाता है 'सता सोम्य तदा सम्पन्नो भवति'। तब अज्ञान नहीं रहा। फिर बाद में अज्ञान कहाँ से उत्पन्न हुआ जो जीव और ईश्वर को अलग करे ।। २९ ।।

**मैवमज्ञानमत्रोक्तं सति सम्पद्य नो विदुः ।**
**न विदुः शब्दतस्तत्र स्पष्टमाचष्ट तच्छ्रुतिः ।। ३० ।।**

आ०—सति सम्पद्य 'न विदुः'। इस श्रुत में 'न विदुः' से स्पष्ट ही सुषुप्ति में अज्ञान बताया है ।। ३० ।।

मैवं सुखं च दुःखं च न पुंस्यभ्युपगम्यते ।
किन्त्वन्तःकरणे सत्त्वरजःपरिणती हि ते ।। २१ ।।

उत्तरः—सुख और दुःख पुरुष में नहीं है, किन्तु अन्तःकरण में होते हैं। क्योंकि सुख सत्त्व का और दुःख रज का परिणाम है ।।२१।।

अन्तःकरणसांनिध्यादुपरक्तः पुमान् भवेत् ।
ताभ्यां, स चायमध्यासो भोग इत्यभिधीयते ।। २२ ।।

अन्तः करण के सांनिध्य से पुरुष सुख और दुःख से उपरक्त होता है यह अध्यास है, और यही भोग है ।।२२।।

प्रकृतिर्ज्ञाततत्त्वस्य सुखदुःखे न कारयेत् ।
जीवन्मुक्तिरियं ख्याता तत्त्वज्ञानफलात्मिका ।। २३ ।।

तत्त्वज्ञान होने पर प्रकृति अन्तःकरण में विशिष्ट सुखदुःख उत्पन्न नहीं करती ! यह जीवन्मुक्ति का लक्षण है ।।२३।।

प्रारब्धवशवर्त्ती च यावत्प्रारब्धसंस्थिति ।
जीवेद्धृतशरीरः संभ्रक्रभ्रमिवदेव सः ।। २४ ।।

प्रारब्ध जब तक रहता है तब तक शरीर रहता है। जैसे एक बार घुमाया तो वेग जब तक रहता है तब तक चक्र घूमता है ।।२४।।

पतिते च शरीरे न पुनर्देहं करोति सा ।
विदेहमुक्तिरेषोक्ता स्वरूपस्थः पुमांस्तदा ।। २५ ।।

जब शरीर का पतन हो जाता है तब तत्त्वज्ञानी का प्रकृति पुनः शरीर निर्माण नहीं करती। यही विदेहमुक्ति है। उस समय पुरुष स्वरूपस्थित होता हैं ।।२५।।

गूढं रहस्यमाचष्ट धन्यो धन्यो जगद्गुरुः ।
इति ब्रुवाणाः सांख्याश्च गुरुं तमनुसंययुः ।। २६ ।।

धन्य हो जगद्गुरु। आपने गूढ रहस्य बताया। ऐसा कहते हुए सांख्य भी आचार्य के पीछे पीछे चले ।।२६।।

तावद्योगविदोऽभ्येत्य निरुध्य च गुरुं जगुः ।
अज्ञातयोगोऽसर्वज्ञः पृच्छामो वयमप्यतः ।। २७ ।।

इतने में योगी लोग आकर रोकते हुए बोले कि जिसने योग नहीं जाना वह सर्वज्ञ नहीं हो सकता, अतः अब हम पूछते हैं कि—।।२७।।

योगिनः कतिधा योगशास्त्रं च प्रावृतत्कथम् ।
यदि जानासि तद् ब्रूहि भूमिकाभिः सभूमिभिः ।। २८ ।।

योगी कितने प्रकार के होते हैं। योग शास्त्र की प्रवृत्ति किस प्रकार है? भूमिका और भूमियों का भी वर्णन करो ।।२८।।

क्षिप्तं मूढं च विक्षिप्तमेकाग्रं सनिरुद्धकम् ।
भूमयः पञ्च तत्रान्त्यद्वयं स्याद्योगपक्षगम् ।। २९ ।।

क्षिप्त, मूढ, विक्षिप्त, एकाग्र और निरुद्ध ये पाँच भूमियाँ हैं। इनमें योग पक्ष में अन्तिम दो ही हैं ।।२९।।

योगिनोऽत्र चतुर्धा स्युराद्यः प्रथमकल्पिकः ।
मधुभूमिक उक्तोऽन्यः प्रज्ञाज्योतिस्तृतीयकः ।। ३० ।।
चतुर्थः समतिक्रान्तभावनीय उदीरितः ।
सामान्यलक्षणं तेषामिदमत्र विधीयते ।। ३१ ।।

योगी चार प्रकार के हैं। प्रथमकल्पिक, मधुभूमिक, प्रज्ञाज्योति और समतिक्रान्तभवनीय। अब क्षिप्तादि सबका सामान्य लक्षण सुनिये ।।३०-३१।।

प्रवृद्धरजसां क्षिप्तं चित्तं विषयलोलुपम् ।
विषयास्वादकाले च योगवद्विषयस्थिरम् ।। ३२ ।।

(१) क्षिप्तः—रजोगुण अधिक रहता है। चित्त विषयलोलुप होता है। विषयास्वादन काल में योग के समान ही मानो स्थिर भी रहता है ।।३२।।

प्रवृद्धतमसो मूढं चित्तं स्फूर्त्तिविवर्जितम् ।
निद्रादिसमये शून्यमुद्रिक्ताभिर्हि वृत्तिभिः ।। ३३ ।।

(२) मूढः—तमोगुण बढ़ा रहता है। चित्त स्फूर्ति रहित होता है। निद्रादि समय में उद्रिक्त वृत्तियों से शून्य रहता है ।।३३।।

योगे प्रयतमानस्य चित्तं विक्षिप्यति स्वयम् ।
ईषत्स्थिरत्वतश्चेषत्समाधिस्तत्र वर्त्तते ।। ३४ ।।

(३) विक्षिप्त—योगार्थ प्रयत्न कर रहे हैं, लेकिन चित्त में विक्षेप होता रहता है। थोड़ा स्थिर होने से समाधि भी अल्प होती है ।।३४।।

तथापि योगिनो नैते योगलक्षणवर्जनात् ।
चित्तवृत्तिनिरोधो हि योग इत्यभिधीयते ॥ ३५ ॥

फिर भी विक्षिप्त योगी नहीं और पूर्वोक्त दो भी योगी नहीं हैं। कारण योग का लक्षण उनमें नहीं है। चित्तवृत्ति का निरोध ही योग है ॥३५॥

निरोधनं निरोधः स्याद्यत्नपूर्वकसंस्थितिः ।
क्षिप्ते मूढे च निर्यत्नो निरोधो विषयोद्भवः ॥ ३६ ॥

निरोध अर्थात् यत्नपूर्वक स्वरूपस्थिति। क्षिप्त और मूढ में विषय से निरोध होता है, यत्न से नहीं ॥३६॥

सयत्नेऽपि हि विक्षिप्ते निरोधो नोपजायते ।
किंचित्कालाभिभावेऽपि वृत्तीनां पुनरुद्भवात् ॥ ३७ ॥

विक्षिप्त में यद्यपि यत्न रहता है। किन्तु निरोध नहीं होता। कुछ काल तक वृत्ति अभिभूत होती है, फिर उद्भूत होती है ॥३७॥

नित्यमभ्यस्यतो योगं चित्तं स्याज्ज्योतिरुन्मुखम् ।
प्रवृत्तमात्रज्योतिः स भवेत्प्रथमकल्पिकः ॥ ३८ ॥

अब (४) एकाग्र और (५) निरुद्ध भूमिकाभेद से सुनिये। योग का नित्य अभ्यास करने से चित्त ज्योति के उन्मुख होता है। यही प्रवृत्तमात्रज्योति प्रथमकल्पिक है ॥३८॥

वितर्केण विचारेणानन्देनास्मितयापि च ।
भवेदनुगमात्तस्य समाधिः सविकल्पकः ॥ ३९ ॥

उसको वितर्कानुगत, विचारानुगत, आनन्दानुगत और अस्मितानुगत सविकल्पक समाधियां क्रमेण होती हैं ॥३९॥

वितर्कः स्थूल आभोगो विचारः सूक्ष्म एव च ।
आनन्दः सुखमन्तस्थमस्मिताऽहमिति स्थितम् ॥ ४० ॥

वितर्क (समाधि) स्थूलवस्त्वेकाग्रित है। विचार सूक्ष्मवस्त्वेकाग्रित, आनन्द सुखैकाग्रित और अस्मिता आत्मार्थैकाग्रित है ॥४०॥

तस्य श्रुतानुमानाभ्यामन्या प्रज्ञा प्रवर्त्तते ।
ऋतम्भरप्रज्ञ एष द्वितीयो मधुभूमिकः ॥ ४१ ॥

श्रुत और अनुमान से विलक्षण ऋतंभरा प्रज्ञा उसको होती है। यही दूसरी मधुभूमिका है ॥४१॥

अस्मिन् मधुमती नाम भूमिका संप्रवर्त्तते।
विशेषविषयज्ञानमधुना मधुरा हि सा ॥ ४२ ॥

इस अवस्था में मधुमती नाम की भूमिका होती है। विशेषविषयज्ञान-रूपी मधु से वह मधुर रहतो है ॥४२॥

भूतेन्द्रियजयी योगी प्रज्ञाज्योतिरितीर्यते।
मधुप्रतीका तस्यैव विशोका चैव भूमिके ॥ ४३ ॥

भूत और इन्द्रियों को जीतनेवाला योगी प्रज्ञाज्योति कहलाता है। यही तीसरा है। वहाँ प्रधुप्रतीका और विशोका ये दो भूमिकायें होती हैं ॥४३॥

मनोजवो विकरणभावः कार्यजयस्तथा।
विशोकमध्वेकदेशप्रतीकास्वादसिद्धयः ॥ ४४ ॥

विशोक और मधु के एकदेश प्रतीक के आस्वादन की सिद्धियाँ मनोजव, विकरणभाव और कार्यंजय हैं ॥४४॥

विशोका सर्वभावाधिष्ठानं सर्वज्ञतापि च।
सा सत्त्वपुरुषान्यत्वख्यातिनिष्ठस्य सिद्धयति ॥ ४५ ॥

विशोका का मतलव है सर्वभावाधिष्ठान और सर्वज्ञता। प्रकृतिपुरुष-विवेकख्याति से वह सिद्ध होती है ॥४५॥

परवैराग्यवान् क्रान्तभावनीयो निगद्यते।
एकोऽर्थस्तस्य वै चित्तप्रतिसर्गो हि योगिनः ॥ ४६ ॥

परवैराग्यवाला क्रान्तभावनीय कहलाता है। उस योगी के लिये भावनीय (कर्त्तव्य) एक ही रह जाता है। वह यह कि चित्त का प्रतिसर्ग (मूल में मिलाना) ॥४६॥

संस्कारशेषां तस्याहुर्भूमिकां योगवेदिनः।
विरामप्रत्ययाभ्यासपूर्वोऽयं निर्विकल्पकः ॥ ४७ ॥

उसकी संस्कारशेषा भूमिका होती है। विरामप्रत्ययाभ्यासपूर्वक असं-प्रज्ञात समाधि उसकी होती है ॥४७॥

अविद्या चास्मिता रागो द्वेषश्चाभिनिवेशिता ।
पञ्च क्लेशा विनश्यन्ति परवैराग्यशालिनः ॥ ४८ ॥

परवैराग्यवाले योगी के अविद्या, अस्मिता, राग, द्वेष और अभिनिवेश-रूपी पांच क्लेश नष्ट होते हैं ॥४८॥

अथास्य योगशास्त्रस्य प्रवृत्तिः कीदृशीत्यपि ।
ब्रवीमि श्रूयतां तच्च सावधानमनस्तया ॥ ४९ ॥

अब योगशास्त्र की प्रवृत्ति कैसी है यह भी बताता हूँ ॥४९॥

हेयं च हेयहेतुश्च हानं तद्धानसाधनम् ।
दुःखं दृग्दृश्यसंयोगः कैवल्यं च विवेकधीः ॥ ५० ॥

रोगश्च धातुवैषम्यं स्वास्थ्यं चैव भिषक्क्रिया ।
चतुर्व्यूहश्चिकित्सायां तद्वदत्रापि बुध्यताम् ॥ ५१ ॥

वैद्यक शास्त्र के समान योगशास्त्र की भी प्रवृत्ति होती है। वैद्यक में रोग, निदान, स्वास्थ्य, उपचार यह चतुर्व्यूह है। योगशास्त्र में हेय, हेयहेतु, हान, हानसाधन ये चार हैं। हेय—दुःख। हेय का (दुःख का) कारण—दृग्दृश्यसंयोग। हान—कैवल्य, हानसाधन—विवेकबुद्धि ॥५०-५१॥

हेयं दुःखमनायातं संयोगो हेयकारणम् ।
तस्य हेतुरविद्या च विवेकेन निवर्त्तते ॥ ५२ ॥

अनागत दुःख ही हेय है। उसका कारण दृश्य और द्रष्टा का संयोग है। उसका कारण अविद्या है। विवेक से उस अविद्या की ही निवृत्ति होती है ॥५२॥

ततः संयोगविगमे स्वस्वरूपप्रतिष्ठितिः ।
गुणप्रतिप्रसूतिश्च हानं कैवल्यलक्षणम् ॥ ५३ ॥

संयोग समाप्त हुआ तो स्वस्वरूपप्रतिष्ठा और प्रकृतिविकारों का प्रति-प्रसव (विलय) होता है, वही कैवल्य है ॥५३॥

योगाङ्गनामनुष्ठानादशुद्धिप्रक्षये सति ।
विवेकख्यातिरुदयेज्ज्ञानदीप्त्यानुपप्लवा ॥ ५४ ॥

यमनियमादि योगांगों के अनुष्ठान से अशुद्धिक्षय होता है। उस से ज्ञान की दीप्ति होती है, जिससे निर्बाध विवेकख्याति होती है ॥५४॥

योगानामिति परमं रहस्ययोगं
संशम्य प्रमुदितचेतसो विधिज्ञाः ।
अत्युच्चैर्जयजयघोषमादरेणा-
ऽऽतन्वानास्तमनुययुर्गुरुं गुरूणाम् ॥ ५५ ॥

इस प्रकार योगशास्त्र का परमरहस्ययोग सुनकर योगविधिवेत्ता वे अत्यन्त प्रमुदित हो गये । जोर से आदर के साथ जय जयकार बोलते हुए गुरुओं के भी गुरु आचार्य का उन्होंने भी अनुगमन किया ॥५५॥

शंकराचार्यचरिते जयमङ्गलगुम्फिते ।
एकविंशो गतः सर्गः सांख्ययोगसमन्वितः ॥ २१ ॥



## अथ द्वाविंशः सर्गः

उद्गच्छन्नग्रतो रुद्धः प्राज्ञैः पाशुपतादिभिः ।
अस्मदीयानपि प्रश्नान् समाधेहीतिभाषिणः ॥ १ ॥

आचार्य आगे बढ़ रहे थे । इतने में हमारे भी प्रश्नों का समाधान करो कहते हुए पाशुपतादि ने आकर रोका ॥१॥

आख्याहि पशुपत्याख्यां समाख्यां सर्वविद्यदि ।
यथान्यायं स्मरन् पाशुपतसिद्धान्तपद्धतिम् ॥ २ ॥

बोलो—पशुपति की क्या समाख्या है (योगार्थ है) । यदि सर्वज्ञ हो तो न्यायानुसार पाशुपतसिद्धान्त को समझकर समझाओ ॥२॥

उच्यते पशुरित्युक्तो जीवस्तत्र पशुत्वकृत् ।
मिथ्याज्ञानमधर्मश्च सक्तिर्हेतुश्च्युतिस्तथा ॥ ३ ॥

सिद्धान्त—पशु जीव को कहते हैं । मिथ्याज्ञान, अधर्म सक्ति, हेतु और च्युति इन पांच से पशुत्व होता है ॥३॥

नित्याश्च विभवश्चैते पशवः पाशसंयुताः ।
अनवच्छिन्नसद्भाववस्तुत्वाद्देशकालतः ॥ ४ ॥

पाशवाले पशु हैं। वे नित्य और व्यापक हैं। देश और काल से अनवच्छिन्न सत्तावाले हैं ॥४॥

मोक्षे शिवस्वरूपं ते प्रपद्याभिन्नतामियुः ।
तस्मात्सांख्यादिवन्नैव सर्वदा भिन्नरूपिणः ॥ ५ ॥

मोक्ष में ये पशु शिवस्वरूप को प्राप्त होकर अभिन्न हो जाते हैं। अतः सांख्यादिमतवत् भेद नित्य नहीं है ॥५॥

पाशवन्तो हि पशवः पाशः पञ्चविधो भवेत् ।
मलं कर्म च माया च रोधशक्तिः सबिन्दुका ॥ ६ ॥

पाशवान् पशु हैं। मल, कर्म माया, रोधशक्ति और विन्दु ये पांच पाश हैं ॥६॥

यत्स्वज्ञानक्रियाशक्त्यावरणं तन्मलं स्मृतम् ।
कर्म प्रवाहतोऽनादि धर्माधर्मात्मकं विदुः ॥ ७ ॥

अपनी ज्ञानशक्ति और क्रियाशक्ति को ढकनेवाला मल होता है। प्रवाहानादि धर्माधर्म कर्म है ॥७॥

प्रलये शक्तिरूपेण सृष्टौ चैव कलादिना ।
कार्याणि यत्र वा सान्ति माया भोगप्रवर्त्तिनी ॥ ८ ॥

प्रलय में शक्तिरूपसे और सृष्टि में कला आदि रूपसे जो रहे, जहां समस्तकार्य समा जाये वह माया है, वह भोगों को देनेवाली है ॥८॥

रोधशक्तिस्तिरोधानं परमेश्वरवर्त्ति तत् ।
तथापि पुंस्तिरोधानात्पाशत्वेनेह कीर्त्तिता ॥ ९ ॥

रोधशक्ति तिरोधान को कहते हैं। यद्यपि वह परमेश्वरस्थ है। तथापि पुरुषतिरोधान करने से यहाँ पाश माना गया है ॥९॥

शिवतत्त्वभिदा बिन्दुस्तद्युतोऽपरमुक्तिमान् ।
विद्येश्वरादिपदभाक् पाशत्वमपरत्वतः ॥ १० ॥

बिन्दु शिवतत्त्वविशेष ही है। उससे युक्त अपरमुक्तिवाला विद्येश्वरादि कहलाता है। अपर होने से पाश कहा गया ॥१०॥

यावदूर्ध्वं प्रगच्छन्ति तावत्पतनतो भयम् ।
विन्दुपर्यन्तमान्तेऽयं पाशत्वेनोररीकृतः ॥ ११ ॥

जितना ऊपर जाय उतना ही पतनभय भी रहता है। अतएव बिन्दु-पर्यन्त पाश माना गया है ॥११॥

पाता पशूनां कर्मादिफलदाता महेश्वरः ।
स्वतन्त्रः परमानन्दचितिः पशुपतिः स्मृतः ॥ १२ ॥

जो पशुओं के पाता = रक्षक और कर्मफलदाता है वही स्वतन्त्र परमानन्द-चिद्रूप महेश्वर पशुपति है ॥१२॥

अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ॥ १३ ॥

ये सभी जन्तु अज्ञानी हैं। अपने सुखदुःख में अनीश्वर हैं। ईश्वर प्रेरित होकर स्वर्ग या नरक जाते हैं ॥१३॥

प्राणभृत्कर्मसापेक्षः सृजत्यवति हन्ति सः ।
जगदेतन्न सापेक्षभावात्स्वातन्त्र्यविच्युतिः ॥ १४ ॥

प्राणिकर्मसापेक्ष होकर जगत् की सृष्टि स्थिति संहार वह करता है। सापेक्ष भाव से स्वातन्त्र्यहानि नहीं है। क्योंकि ॥१४॥

स्वतन्त्रस्याप्रयोज्यत्वं करणादिप्रयोक्तृता ।
कर्त्तुः स्वातन्त्र्यमेतद्धि न कर्माद्यनपेक्षिता ॥ १५ ॥

जो प्रयोज्य नही, करणादिप्रयोक्ता है तद्भाव ही स्वातन्त्र्य है। न कि कर्मादि की अनपेक्षिता ॥१५॥

तद्वपुः पञ्चभिर्मन्त्रैः पञ्चकृत्योपयोगिभिः ।
ईशतत्पुरुषाघोरवामाद्यैर्मस्तकादिमत् ॥ १६ ॥
मस्तकाननहृद्गुह्यपादमीशानतः क्रमात् ।
सद्योजातान्तमन्त्रैः स्याद्वपुरन्यदुपास्तये ॥ १७ ॥

ईशान, तत्पुरुष, अघोर, वामदेव और सद्योजात ये क्रमशः 'ईशानः सर्वविद्यानां' इत्यादि पञ्चमन्त्रस्वरूप हैं, मस्तक, मुख, हृदय, गुह्य और पादरूपी महेश्वरावयव हैं। यह मन्त्रशरीर हुआ। अन्यशरीर उपासनार्थ है ॥१६-१७॥

सृष्टिः स्थितिश्च संहारस्तिरोभावोऽप्यनुग्रहः ।
पञ्चकृत्यमिदं प्रोक्तमीशानादिक्रमेण हि ॥ १८ ॥

सृष्टि, स्थिति, संहार, तिरोभाव और अनुग्रह ये पांच कृत्य हैं, इन्हें ईशानादि के कृत्य समझना ॥१८॥

विद्या क्रिया च योगश्च चर्या चेति चतुष्टयम् ।
समाश्रितानसौ पाति ततः पशुपतिर्मतः ॥ १९ ॥

विद्या, क्रिया, योग और चर्या इन चार साधन वालों की वे रक्षा करते हैं अतः पशुपति कहलाये ॥१९॥

दीयते यत्र विद्यादिः क्षीयते च मलादिकम् ।
सा दीक्षा मन्त्रमन्त्रेशप्रभृतिज्ञानदायिनी ॥ २० ॥

दीक्षा से मन्त्र एवं मन्त्रेश्वरादि का ज्ञान (विद्या) होता है। दी = विद्याददायी। क्षा = मलादिक्षयकारक ॥२०॥

विद्यामन्त्रादिविज्ञानं शिवसाक्षात्कृतिस्तथा ।
आद्याऽपरा परा चान्त्या सैव मुख्या सतां मता ॥ २१ ॥

मन्त्रादि ज्ञान तथा शिवसाक्षात्कार दोनों ही विद्या है। प्रथम अपर विद्या है, द्वितीय पराविद्या है। द्वितीय ही मुख्य है ॥२१॥

साङ्गपूजादिकविधिः क्रिया विद्याप्रयोजिका ।
प्राणायामादयो योगाः क्रियासिद्धिप्रयोजकाः ॥ २२ ॥

सांग पूजादि को क्रिया कहते हैं, वह विद्या का कारण है। क्रिया-सिद्धि का कारण प्राणायामादि योग कहलाता है ॥२२॥

विहिताचरणं चैव निषिद्धपरिवर्जनम् ।
चर्येति गदितं विद्या-क्रिया-योगोपकारिका ॥ २३ ॥

विहितकरण और निषिद्धत्याग ही चर्या कहलाती है। यह विद्या, क्रिया, योग इन पूर्वोक्त तीनों की उपकारिका है ॥२३॥

एतैश्च साधनैर्युक्तो मिथ्याज्ञानादिकं क्रमात् ।
तीर्त्वा पाशांश्च संछिद्य शिवत्वं प्रतिपद्यते ॥ २४ ॥

उक्त साधनों से युक्त होकर मिथ्याज्ञानादि को और पाशों को काटकर साधक शिवत्व को प्राप्त होता है ॥२४॥

सर्वपाशकरोऽप्येव सर्वपापविमोक्षणः ।
तस्मात्पशुपतिर्नाम सर्वशक्तिर्महेश्वरः ॥ २५ ॥

सब पाशों को करते हैं इसलिये पशुपति है। सब पापों से मुक्त कर रक्षा करते हैं इसलिये भी पशुपति हैं। सर्वशक्तिमान् महेश्वर ही वे पशुपति हैं ॥२५॥

धन्यधन्यो ह्ययं कोऽपि महेश्वर इवापरः ।
इति स्तुत्वा पाशुपता गुरुं तेऽनुययुः परम् ॥ २६ ॥

धन्य हो धन्य हो, ये तो दूसरे महेश्वर जैसे सर्वज्ञ हैं, ऐसी स्तुति करते हुए पाशुपत भी आचार्य के पीछे चले ॥२६॥

अथाजग्मुः प्रधावन्तो विविधा वैष्णवा द्रुतम् ।
सर्वज्ञश्चेत्तदा त्वं नः प्रश्नानामुत्तरं वद ॥ २७ ॥

इतने में दौड़ दौड़कर अनेक वैष्णव आये। और बोले कि यदि सर्वज्ञ हो तो हमारे प्र श्नों का उत्तर दो ॥२७॥

पञ्चधावस्थितिं ब्रूहि वौधायनमतेन भोः ! ।
ब्रह्मणोऽवस्थितेश्चापि सप्रयोजनता कथम् ॥ २८ ॥

प्र०—बोधायनानुयायिमतानुसार ब्रह्म का पञ्चधावस्थान और अवस्थान का प्रयोजन कहो ॥२८॥

वासुदेवः परं ब्रह्म कल्याणगुणसंयुतः :
भुवनानामुपादानं कर्त्ता जोवनियामकः ॥ २९ ॥

उ०—कल्याणगुणसंयुत वासुदेव परब्रह्म है। भुवनों का उपादान, कर्त्ता और जीवनियामक है ॥२९॥

प्रकृत्या जगदेतच्च सृजत्यवति हन्ति सः ।
जोवात्मा च जगच्चैव तस्यैके कायमूचिरे ॥ ३० ॥

वासुदेव ही प्रकृति के द्वारा जगत् की सृष्टि स्थिति संहार करते हैं। जीवात्मा और जगत् को कुछ वोधायनानुयायी भगवान् का शरीर मानते हैं ॥३०॥

शरीरं यस्य विज्ञानं विज्ञानं यमयत्यसौ ।
अन्तर्यास्येष चात्मा त इत्येवं श्रुतिषु श्रुतः ॥ ३१ ॥

'यस्यात्मा शरीरं' इत्यादि अन्तर्यामीश्रुति से यह सिद्ध है ॥३१॥

स चार्चाविभवव्यूहसूक्ष्मान्तर्यामिभेदतः ।
पञ्चधावस्थितो नानाफलदो भक्तवत्सलः ॥ ३२ ॥

वे ही अर्चा, विभव, व्यूह, सूक्ष्म और अन्तर्यामी रूप से नानफल देते हुए भक्तवत्सल पञ्चधा अवस्थित हैं ॥३२॥

अर्चावतारः कथितः प्रतिमादिः कृपानिधेः ।
अज्ञोऽपि यमुपास्योपचारैः सिद्धिं व्रजेत्क्रमात् ॥ ३३ ॥

प्रतिष्ठित प्रतिमादि अर्चावतार है। जिसकी पूजादि से अज्ञानी भी क्रमात् सिद्धि प्राप्त करता है ॥३३॥

रामादयश्च विभवावताराः परिकीर्त्तिताः ।
अर्चार्चनाप्तसामर्थ्या जप्त्वा तान् सिद्धिमाप्नुयुः॥ ३४ ॥

रामकृष्णादि विभवावतार है। मूर्तिपूजनादि से सामर्थ्य प्राप्त कर रामादि का जप करें तो सिद्धि मिलती है ॥३४॥

सङ्कर्षणो वासुदेवः प्रद्युम्नोऽप्यनिरुद्धकः ।
व्यूहश्चतुर्विधः पूजा मण्डले तस्य सिद्धिदा ॥ ३५ ॥

वासुदेव, संकर्षण, प्रद्युम्न और अनिरुद्ध यह चतुर्व्यूह है। इनकी मण्डल में पूजा सिद्धिदायिनी है ॥३५॥

अर्चोपासनया नष्टे कल्मषेऽधिकृतो भवेत् ।
विभवोपासने पश्चाद् व्यूहोपास्तौ ततः परम् ॥ ३६ ॥

अर्चोपासना से पापनाश होने पर विभवोपासना में सच्चा अधिकार होता है। विभवोपासना से व्यूहोपासना में ॥३६॥

संपूर्णषड्गुणं सूक्ष्ममुपास्यं ब्रह्म तद्धृदि ।
ततोऽधिकारी भवति ह्यन्तर्यामिणमीक्षितुम् ॥ ३७ ॥

ज्ञानैश्वर्यादि सम्पूर्णषड्गुण :वाला सूक्ष्म ब्रह्म है। उसकी हृदय में उपासना करें। तब अन्तर्यामी को देखने के अधिकारी बनते हैं ॥३७॥

तस्य पञ्चविधोपास्तिस्तत्राभिगमनं ततः ।
उपादानं ततश्चेज्या स्वाध्यायो योग एव च ॥ ३८ ॥

अभिगमन, उपादान, इज्या, स्वाध्याय और योग से पांच प्रकार की उपासना है ॥३८॥

संमार्जनोपलेपादि तत्राभिगमनाभिधम् ।
उपादानं गन्धपुष्पपूजासंभारसंभृतिः ॥ ३९ ॥
इज्या तु देवपूजैव स्वाध्यायोऽर्थपुरःसरः ।
मन्त्रजापः स्तोत्रपाठः कीर्त्तनं शास्त्रचिन्तनम् ॥ ४० ॥
योगस्तु वासुदेवानुसन्धानं ध्यानलक्षणम् ।
कर्मोपास्तिसमुच्चित्या विज्ञानं जायते परम् ॥ ४१ ॥

(१) अभिगमन = संमार्जन लेपनादि। (२) उपादान = गन्धपुष्पादि पूजा सामग्री लाना। (३) इज्या = देवपूजा (४) स्वाध्याय = जप, स्तुति, कीर्त्तन और शास्त्र चिन्तन (५) योग = ध्यान वासुदेवानुसंधान। कर्म और उपासना के समुच्चय से विज्ञान होता है ॥३९-४१॥

भक्तिर्नाम च विज्ञानविशेषो वृत्तिकृन्मतः ।
तत्प्राप्तिसाधनत्वेन विवेकादिश्च भाषितः ॥ ४२ ॥

वृत्तिकार बोधायन विज्ञानविशेष को ही भक्ति मानते हैं। उसके साधन विवेकादि हैं ॥४२॥

विवेकश्च विमोकश्चाप्यभ्यासश्च क्रियापि च ।
कल्याणं नावसादश्चानुद्धर्षश्चेति सप्त ते ॥ ४३ ॥

विवेक, विमोक, अभ्यास, क्रिया, अनवसाद अनुद्धर्ष ये छः कल्याण के कारण हैं सातवाँ कल्याण कार्य है ॥४३॥

विवेकः सत्त्वशुद्धिः स्यात्तदाहारादिशुद्धितः ।
विमोकः कामहृत् 'शान्त उपासीते'ति च श्रुतेः ॥ ४४ ॥
मुहुःशीलनमभ्यासः 'सदा तद्भावभावितः' ।
'क्रियावानेष च ब्रह्मविदां' श्रौतादिकक्रिया ॥ ४५ ॥
'सत्येनलभ्यस्तपसा' कल्याणानि जगौ श्रुतिः ।
बलहीनेन नो लभ्योऽनवसादस्त्वदीनता ॥ ४६ ॥
अनुद्धर्षो भवेत्तुष्टिः 'शान्तो दान्त' इति श्रुतेः ।
विज्ञानात्पुनरावृत्तिरहितं वैष्णवं पदम् ॥ ४७ ॥

"आहारशुद्धौ सत्त्वशुद्धिः" इस श्रुति में कथित सत्त्वशुद्धि विवेक है। "तज्जलानिति शान्त उपासीत" यह कामहारी विमोक है। 'यं यं वापि' 'सदा तद्भावभावितः' यह अभ्यास है। श्रौत स्मार्त्त क्रिया है। सत्य तप आदि कल्याण है। "नायमात्मा बलहीनेन लभ्यः" से जो अदीनता बतायी वह अनवसाद है। 'शान्तो दान्त' इत्यादि श्रुत्युक्त तुष्टि अनुद्धर्ष है। इनसे विज्ञान की और उससे वैष्णव पद की प्राप्ति होती है ॥४४-४७॥

**धन्यो नारायणसमः संश्रयामो भवत्पदम् ।**
**इति बौधायनीयेषु नारदीया इदं जगुः ॥ ४८ ॥**

धन्य हैं, आप नारयण समान हैं, आपके चरणों के हम दास हैं, यूं वोधयानानुयायी बोल रहे थे, इतने में नारदीयानुयायी बोले ॥४८॥

**भक्ति व्याख्याहि तत्त्वेन यदि त्वं सर्वविन्मतः ।**
**तत्प्राप्यं च परं ब्रह्म कीदृगित्युपवर्णय ॥ ४९ ॥**

आप यदि सर्वज्ञ हैं तो भक्ति की व्याख्या कीजिये। भक्तिप्राप्य परब्रह्म का स्वरूप भी बताईये ॥४९॥

**साध्यसाधनभेदेन भक्तिर्हि द्विविधा मता ।**
**साधनं च त्रिधा नामसेवाभावविभेदतः ॥ ५० ॥**

भक्ति दो प्रकार की होती है। साध्य भक्ति और साधन भक्ति। साधन भक्ति तीन है—नामभक्ति सेवाभक्ति और भावभक्ति ॥५०॥

**श्रवणं कीर्त्तनं चैव नाम्नां स्मरणमेव च ।**
**नामापराधरहितं नामभक्तिरुदीरिता ॥ ५१ ॥**

श्रपण, कीर्त्तन ओर नामस्मरण जो नामापराधरहित है, नामभक्ति ।५१

**सेवापराधरहितं पादसेवनमर्चनम् ।**
**वन्दनं चेति हि त्रेधा सेवाभक्तिरुदीरिता ॥ ५२ ॥**

सेवापराध के विना पादसेवन, अर्चन और वन्दन सेवाभक्ति है ॥५२॥

**दास्यसख्यादिकं भावभक्तिर्यत्रेदमीर्यते ।**
**स सर्वविद्भजति मां सर्वभावेन भारत ॥ ५३ ॥**

दास्य सख्य-आत्मनिवेदनादि (यहाँ वातसल्यादि भी ग्राह्य है) भावभक्ति हे। 'सर्वभावेन' इस गीताशब्द में यही बताया है ॥५३॥

अयं च परमो धर्मो यतो भक्तिरधोक्षजे ।
अहैतुक्यप्रतिहता या प्रोक्ता साध्यलक्षणा ॥ ५४ ॥

श्रवणादि परमधर्म है, क्योंकि उससे भगवान् में साध्यलक्षण परमभक्ति होती है ॥५४॥

यः पुनर्यागदानादिः स्वर्गादिफलदायकः ।
अधर्मतुल्य एवासौ श्रम एव हि केवलम् ॥ ५५ ॥

यागदानादि जो स्वर्गदायक हैं, लोग धर्म उनको कहते हैं। पर वे अधर्म तुल्य ही हैं। श्रममात्र है। क्योंकि फिर भी संसार में आना ही है ॥५५॥

प्रकाशस्तु स हि प्रोक्तो यो ह्यन्धतमसापहः ।
धर्मश्च परमः स स्याद्योऽधर्मदुरितापहः ॥ ५६ ॥

प्रकाश वही है जो अन्धकार को हटावे। धर्म वही है जो अधर्म को मिटावे ॥५६॥

अजामिलो महापापी श्रुतिस्मृत्यनुसारतः ।
यमदूतैर्विनिर्दिष्टो धर्मलक्षणहानतः ॥ ५७ ॥
नामाभासोऽपि भगवत्सम्बन्धाद्धर्मभावभाक् ।
इत्यतो विष्णुदूतैश्च धार्मिकत्वेन दर्शितः ॥ ५८ ॥

यमदूतों ने श्रुतिस्मृत्यनुसार, धर्मलक्षण न होने से अजामिल को पापी बताया। नामाभास में भी भगवत्सम्बन्ध होने से विष्णुदूतों ने धार्मिक सिद्ध किया ॥५७-५८॥

एवं साधनभक्त्या च साध्यभक्तिः प्रजायते ।
भक्त्या संजातया भक्त्येत्येवंवचनदर्शनात् ॥ ५९ ॥

साधन भक्ति से साध्य भक्ति होती है। अतएव "भक्त्या संजातया भक्त्या" यह वचन उपपन्न है ॥५९॥

साध्यभक्तिर्निगदिता परमप्रेमलक्षणा ।
तदधीनो हरिः प्रोक्तः परो भक्तिवशः पुमान् ॥ ६० ॥

साध्यभक्ति परम प्रेम ही है। हरि तदधीन है ॥६०॥

चित्तवृत्तेरधीनत्वं मायाधीनत्वमेव च ।
न युज्यते भगवतो नियन्ता हि हरिर्यतः ॥ ६१ ॥

भक्ति चित्तवृत्ति या मायावृत्ति नहीं है । उसके अधीन नियामक हरि कैसे हो सकते हैं ॥६१॥

तस्मादाह्लादिनी शक्तिर्यद्वा तत्त्वान्तरं हि तत् ।
हरेरभिन्नरूपैव साऽऽनन्दरसलक्षणा ॥ ६२ ॥

इसलिये भक्ति भगवान की आह्लादिनी शक्ति या तत्त्वान्तर है । वह हरि से अभिन्न रसरूप हैं । परमानन्दस्वरूप है ॥६२॥

गुणकामविहीनं च प्रतिक्षणविवर्धनम् ।
अविच्छिन्नं परं सूक्ष्मं प्रेमानुभवलक्षणम् ॥ ६३ ॥

गुणरहित, कामना रहित, प्रतिक्षण वर्धमान, अविछिन्न, सूक्ष्मतर, अनुभवरूप वह भक्ति है ॥६३॥

तदेव परमं ब्रह्म परमप्रेमलक्षणम् ।
प्रेमैव प्रेमसंप्राप्यं स्वयंफलविधं यतः ॥ ६४ ॥

यह परमप्रेम ही परमब्रह्म है । प्रेम ही प्रेम से प्राप्य है । वह स्वयंफलस्वरूप है ॥६४॥

तदेव समभिव्यक्तं लीलाविग्रहसुन्दरम् ।
राधामाधवभावेन भक्तैरभिसमीक्ष्यते ॥ ६५ ॥

उस भक्ति का ही अभिव्यक्तरूप लीलाविग्रह प्रेममूर्ति राधामाधव है ॥६५॥

मायिकेन हि रूपेण ब्रह्म हर्यादिरूपभाक् ।
कज्जलीयस्वरागेण चित्रं भित्तौ त्रयीविदः ॥ ६६ ॥
हर्याद्याकारतः स्पष्टं मध्यकृत्ते हि वाससि ।
हर्याद्याकारगगनं तद्वद् ब्रह्मेति भक्तिगाः ॥ ६७ ॥

भित्ति पर स्याही से जैसे रूप बनाया जाता है वैसे ब्रह्मरूपी भित्तिपर मायारूपी स्याही से हरि आदि का रूप लिखा जाता है ऐसा वेदान्ती मानते हैं । भक्त कहते हैं कि ऐसा नहीं । एक माया का बड़ा परदा है । कृष्ण के आकार में परदे को बीच में से काट निकाला तो जैसे साधारण परदे के उस

अंश से आकाश कृष्णाकार दीखता है वैसे ब्रह्म कृष्णाकार दीखता है ॥६७॥

जगदेतत्त्वविकृतपरिणामः परात्मनः ।
मायावृतत्वान्नो भाति हरिरूपेण दुर्धियाम् ॥ ६८ ॥

जगत् हरि का अविकृत परिणाम हैं। माया से आवृत होने के कारण हरिरूप से भासित नहीं होता ॥६८॥

प्रेमाञ्जनाञ्जितदृशां धूतमायावृतीक्षिणाम् ।
प्रेमरूपं परं ब्रह्म सर्वं वस्तूपलक्ष्यते ॥ ६९ ॥

प्रेमाञ्जन से अञ्जित नेत्रवालों को, जिनका मायावरण निकल गया सारा जगत् प्रेमरूप ब्रह्म ही दीखता है ॥६९॥

न मोक्षः पुरुषार्थस्तु भक्तिरेव तथाविधा ।
मुक्तिं ददाम्यहं नृभ्यो न भक्तिमिति चेश्वरः ॥ ७० ॥

मोक्ष पुरुषार्थ नहीं किन्तु भक्ति ही पुरुषार्थ है। अत एव भगवान ने कहा—मैं मुक्ति दे दूँ पर भक्ति-जल्दी नहीं देता ॥७०॥

न मोक्षस्याभिकाङ्क्षा मे न वा विभववाञ्छिता ।
इत्यादिभिर्मया चोक्तं मुक्त्यादेरपुमार्थता ॥ ७१ ॥

देवी स्तुति में मैं भी कह गया था कि मुझे मोक्षेच्छा नहीं संसार वैभवेच्छा नहीं इत्यादि—'न मोक्षस्याकाङ्क्षा' ॥७१॥

अहो महान् कोऽपि नु पार्षदो वा
स्वयं हरिर्वा पुरतः स्थितोऽयम् ।
योऽस्माभिरज्ञातचरं रहस्यं
जगाद तं वै शरणं प्रपन्नाः ॥ ७२ ॥

अहो ! ये महापुरुष कौन हैं ? कोई हरि के पार्षद तो नहीं या स्वयं हरि ही तो नहीं। जो हम लोगों के लिए अज्ञातचर रहस्य भी बता रहे हैं। हम इनके शरणागत हैं ॥७२॥

शङ्कराचार्यचरिते जयमङ्गलगुम्फिते ।
द्वाविंशो निरगात्सर्गो भक्तसिद्धान्तसंभृतः ॥ २२ ॥



## त्रयोविंशः सर्गः

निरस्ता अपि पूर्वं ये जैनबौद्धादयो बुधाः ।
विदितार्थो न वेत्त्येवं पप्रच्छुस्तेऽपि वेदितुम् ॥ १ ॥

पूर्वनिरस्त जैन बौद्धादि ने भी आकर यह जानने के लिए कि क्या इन्होंने जानकर हमारा निरास किया या प्रौढता मात्र से, पूछा ॥१॥

तत्र बौद्धो जगादेदमस्मन्मतचतुष्टयम् ।
स्वसिद्धान्तात्पृथक्कृत्य ब्रूहि नः सर्वविद्यदि ॥ २ ॥

बौद्ध ने कहा हमारे मतचतुष्टय को अपने सिद्धान्त से पृथक् करके बताओ, यदि सर्वज्ञ हो ॥२॥

उच्यते क्षणिकं वैभाषिकसौत्रान्तिकैर्जगत् ।
आद्ये प्रत्यक्षमन्त्ये चानुमेयमिति तद्भिदा ॥ ३ ॥

आचार्य:—वैभाषिक तथा सौत्रान्तिक दोनों के मत में जगत् क्षणिक है। वैभाषिक मत में जगत् प्रत्यक्ष है। सौत्रान्तिक मत में ज्ञान से अनुमेय है ॥३॥

यदि नास्ति कथं ज्ञानं वस्तुनः संवदद् भवेत् ।
अतोऽस्ति वस्त्विति दृढमनुमानं वदन्ति ते ॥ ४ ॥

वस्तु न हो तो संवादिज्ञान नहीं होना चाहिए। अतः वस्तु का अस्तित्व मानना चाहिए ऐसा उनका कहना है ॥४॥

योगाचारो न बाह्यार्थसत्तां खल्वनुमन्यते ।
स तु क्षणिकविज्ञानसंततिं जगदाकृतिम् ॥ ५ ॥

योगाचार बाह्यार्थ सत्ता को नहीं मानता। वह विज्ञानसंतति का आकार ही जगत् को मानता है ॥५॥

विनाऽप्यर्थं यथा स्वप्ने विज्ञानाकारमात्रतः ।
अर्थप्रतीतिर्भवति तथा जाग्रत्यपीति ते ॥ ६ ॥

अर्थ के विना ही सपने में अर्थाकार ज्ञानमात्र से अर्थप्रतीति होती है। जाग्रत् में भी वैसा ही है यह उनका कहना है ॥६॥

**वेदान्ते विद्यते सत्ता स्वप्नेऽपि प्रातिभासिकी ।**
**जाग्रदर्थेऽभ्युपेतं च सत्त्वं सांव्यवहारिकम् ।। ७ ।।**

वेदान्त मत में स्वाप्निक अर्थों में भी प्रतिभासिक सत्ता है। जाग्रत के अर्थो में व्यावहारिक सत्ता है ।।७।।

**किं चात्मा नित्यविज्ञानं वेदान्तेषु निरूपितम् ।**
**सर्वानुस्यूतरूपेण सर्वदा भानदर्शनात् ।। ८ ।।**

वेदान्त में यह भी फरक है कि आत्मा क्षणिक विज्ञान नहीं किन्तु नित्य विज्ञान है। घट को जानता हूँ, पट को जानता हूँ, कल जाना, कल जानूँगा इत्यादि सर्व प्रतीति में अनुगत एक ही ज्ञान है। अतएव वह नित्य और व्यापक है ।।८।।

**शून्यं माध्यमिकाः प्राहुरसद् ध्वंसादिलक्षणम् ।**
**पूर्णं वेदान्तिनः प्राहुः सदनन्तमनादि च ।। ९ ।।**

माध्यमिक बौद्ध शून्य को कारण मानते हैं वह असत् है। बीजध्वंस जगद्ध्वंसादि उसका स्वरूप है। वेदान्ती शून्य के बदले पूर्ण मानते हैं। असत् के बदले सत् मानते हैं। ध्वंसादि के बदले अनाद्यनन्त मानते हैं ।।९।।

**नासन्न सन्न सदसन्नानिर्वाच्यमसत्पदम् ।**
**किन्तु पञ्चममेवेति केचिदत्र प्रचक्षते ।। १० ।।**

दिङ्नागदि का कहना है कि असत्पदार्थ असत् नहीं, सत् नहीं, सद-सत् नही, अनिर्वचनीय भी नहीं किन्तु पञ्चम प्रकार है ।।१०।।

**स्यादविद्यानिवृत्तिस्तु तादृशी यद्यपीह नः ।**
**तथाप्यपुरुषार्थत्वादानन्दं ब्रह्म नः पृथक् ।। ११ ।।**

यद्यपि वेदान्तमत में अविद्यानिवृत्ति को पंचम प्रकार माना जा सकता है। फिर भी वह ध्वंस के समकक्ष ही है। अतः पुरुषार्थरूप नहीं। उससे पृथक् ही आनन्द लक्षण ब्रह्म पुरुषार्थ है ।।११।।

**शून्यतापादनं हिंसा पुमर्थः स कथं भवेत् ।**
**वर्णाश्रमसमाचारः कीदृशो बुद्धसंमतः ।। १२ ।।**

बौद्ध—यह बताईये कि शून्यतापादन हिंसा है। वह पुरुषार्थ किस प्रकार ? वर्णाश्रम के बारे में बुद्ध की क्या मान्यता है ? ।।१२।।

**हिंसा प्राणवियोगः स्यान्नात्मध्वंसस्तथाविधः ।**
**दुःखध्वंसं हि वाञ्छन्ति सर्वोऽप्येव विवेकिनः ॥ १३ ॥**

प्राण वियोजन ही हिंसा है, आत्मध्वंस नहीं। अतएव शून्यतापादन हिंसा नहीं। दुःखध्वंस को सभी पुरुषार्थ मानते हैं। आत्मध्वंस से दुःखध्वंस अवश्यंभावी है ॥१३॥

**यद्वर्णव्यञ्जको धर्मो यत्र तद्वर्ण एव सः ।**
**इति बुद्धः पुरा प्राह न जात्या ब्राह्मणादयः ॥ १४ ॥**

जिसमें जिस वर्ण के अभिव्यञ्जक धर्म दीखे वह उसी वर्ण का है ऐसा बुद्ध ने कहा। जन्मतः ब्राह्मणादि नहीं ॥१४॥

**ननु स्वतो भवेच्छून्यं विश्वध्वंसात्मकं खलु ।**
**किमर्थं विबुधो बुद्धं शरणं गच्छतीति चेत् ॥ १५ ॥**

बौद्धः—विश्वध्वंसरूपी शून्यता स्वतः हो जाएगी। तदर्थ 'बुद्धं शरणं गच्छामि' क्यों ? ॥१५॥

**हिंसानिवृत्तये तद्धि हिंसा दुःखस्य कारणम् ।**
**इह शान्तिरहिंसातः शून्यमार्गस्य च स्थितिः ॥ १६ ॥**

आ०—बुद्धशरणागति हिंसानिवृत्ति के लिए है। क्योंकि हिंसा से जगत् को दुःख होता हैं। अहिंसा से सब को शान्ति मिलती है। और शून्यामार्गस्थिति वही है। अर्थात् शून्य होने पर जो स्थिति है वही लगभग अहिंसा से भी है ॥१६॥

**एवं श्रुत्वातिसंतुष्टो बौद्धोऽभून्नतमस्तकः ।**
**जैनोऽपि कुतुकात्पूर्वनिरस्तोऽप्यब्रवीदिदम् ॥ १७ ॥**

यह सुन कर बौद्ध संतुष्ट हुआ। यद्यपि जैन भी पूर्व निरस्त था फिर भी कुतूहलता से पूछा ॥१७॥

**प्रश्नमेकं तु पृच्छामि ज्ञात्वाज्ञात्वाथवा मतम् ।**
**निरस्तम्मे विजिज्ञासे कोऽस्तिकायो निगद्यताम् ॥ १८ ॥**

एक प्रश्न में पूछूँगा। क्योंकि आपने मेरा मत जानकर खण्डन किया या यूंही प्रतिभामात्र से यह मैं जानना चाहता हूँ। तो बताइये—'अस्ति-काय' किस को कहते हैं ? ॥१८॥

**उच्यते सत्त्वतोऽस्तीति विस्तरात्काय इत्यपि ।**
**जीवपुद्गलधर्माधर्माकाशेषु प्रयुज्यते ।। १९ ।।**

आचार्य :—अस्तिकाय में सत्ता है इसलिये अस्ति कहते हैं । विस्तार होने से काय कहते हैं । जीव, पुद्गल, धर्म, अधर्म और आकाश अस्तिकाय कहे जाते हैं ॥१९॥

**अहो नमोऽरिहन्ताणं सर्ववित् खल्वसौ पुमान् ।**
**इमं सकलविद्यास्थं कः समर्थः परीक्षितुम् ।। २० ।।**

नमो अरिहन्ताणं नमो अरिहन्ताणं । आश्चार्य आश्चर्य । सच में यह सर्वज्ञ है । इनकी परीक्षा कौन कर सकता है ॥२०॥

**इत्थं सर्वेषु विद्वत्सु प्रेम्णा प्रणतमूर्धसु ।**
**मीमांसकोऽभ्युपेत्याह वेदव्याख्यानकोविदः ।। २१ ।।**

इस प्रकार सभी विद्वान नतमस्तक हो चुके थे । तब अन्त में मीमांसक आ गया ॥२१॥

**नूनं सर्वज्ञकल्पोऽसि सर्वशास्त्रविशारदः ।**
**किन्तु वेदानभिज्ञत्वे सर्वज्ञत्वं न कल्पते ।। २२ ।।**

आप लगभग सर्वज्ञ हैं । क्योंकि सर्वशास्त्रवेत्ता हैं । परन्तु वेदानभिज्ञ सर्वज्ञ नहीं माना जा सकता ॥२२॥

**व्याख्यायोत्तरमीमांसां वेदज्ञत्वं च दर्शितम् ।**
**तथापि पूर्वकाण्डस्थं किंचित्पृच्छामि तद्वद ।। २३ ।।**

यद्यपि उत्तरमीमांसा की व्याख्या कर वेदज्ञता भी प्रदर्शित की है । क्योंकि पूर्व मीमांसान्याय उत्तरमीमांसा में भी समान है । फिर भी पूर्व-मीमांसा के बारे में कुछ पूछता हूँ ॥२३॥

**इदं तावत्प्रतिब्रूहि जैमिनीयमतं यथा ।**
**शब्दो हि कतमः कीदृग्द्रव्यकर्मगुणादिषु ।। २४ ।।**

जैमिनीयमतानुसार यह बताइये कि द्रव्यगुणकर्मादि में शब्द कौन है और कैसा है ॥२४॥

**उच्यते सर्वगान् वर्णान् नित्याञ्जैमिनिरब्रवीत् ।**
**द्रव्यरूपानिमान् विद्धि गुणाद्यव्यापकं यतः ।। २५ ।।**

उत्तर :—जैमिनि ने वर्णों को व्यापक और नित्य बताया। उच्चारण से तत्तत्स्थानों में अभिव्यक्ति मात्र होती है। अर्थात् पूर्वमेव तत्तत्स्थानों में विद्यमान है। तभी तो अभिव्यक्ति होगी। नित्य और व्यापक होने से गुण या कर्म नहीं हो सकता, किन्तु द्रव्य ही हो सकता है। अतः वह द्रव्य है ॥२५॥

**नन्वाकाशात्मके द्रव्ये व्यापके व्यापको गुणः।**
**शब्द इत्येव किं न स्यात्कुतोऽयं द्रव्यमुच्यताम् ॥ २६ ॥**

पूर्व :—आकाशरूपी व्यापक द्रव्य में व्यापक शब्द गुण मानने में क्या हानि ? ॥२६॥

**शब्दाश्रयतया सिद्ध्यन्नाकाशो लाघवात् पुनः।**
**शब्दत्वेनैव संसिद्ध्येत् पार्थक्ये हेत्वभावतः ॥ २७ ॥**

उत्तर :—आकाश स्वतः प्रत्यक्ष नहीं है। शब्दाश्रयत्वेन उस की सिद्धि होती है। तब लाघवात् शब्दाश्रय न मानकर शब्दरूप ही माना जायेगा। शब्द और आकाश में पार्थक्य सिद्ध करने वाला कोई हेतु नहीं है ॥२७॥

**यस्य मीमांसकवरः शिष्यत्वं प्राप मण्डनः।**
**प्रष्टव्यं नापरं किंचित्तत्र सर्वजगद्गुरौ ॥ २८ ॥**
**शंकराय नमो लोकशंकराय महात्मने।**
**गुरवे संनतजगद्गुरवेऽस्तु नमो नमः ॥ २९ ॥**

मीमांसकवर मण्डन जिन के शिष्य हैं उन सर्वजगद्गुरु के सामने मीमांसा के बारे में भला क्या पूछना है ? कुछ भी नहीं। ऐसे लोककल्याणकारी शंकर को हमारा बार बार प्रणाम है। समुपागत जगत् के गुरु श्रीगुरु को हमारा बार बार प्रणाम है ॥२८-२९॥

**इत्थं सर्वेषु शास्त्रेषु ते ते लब्धसमाधयः।**
**षण्मतस्थापकं प्राहुराचार्यं सर्ववेदिनम् ॥ ३० ॥**

इस प्रकार समस्त शास्त्रों में नैयायिक वैशेषिकादिने समाधान पाया तो सबने मिलकर कहा कि आचार्य षण्मतस्थापक हैं, सर्ववेत्ता हैं ॥३०॥

**श्रद्धासमन्विताः सर्वेऽप्यनुगम्य मनीषिणः।**
**पीठद्वारं समुद्घाट्य देशिकायाददुः ॥ ३१ ॥**

तथा सभी मनीषियों ने श्रद्धासमन्वित होकर आचार्यजी का अनुगमन किया तथा उनको सर्वज्ञपीठ का दक्षिण द्वार खोलकर दिया ॥३१॥

**अथ पद्मपदस्कन्धमवलम्ब्य च देशिकः ।**
**यदाऽऽरुरुक्षति गिरा गिरां देव्यास्तदाऽभवत् ॥ ३२ ॥**

अनन्तर पद्मपाद का स्कन्धावलम्बन कर ज्यों ही पीठारोहण करने लगे त्यों ही वाणी देवी की आवाज हुई ॥३२॥

**विधिरूपान्तरं जित्वा मण्डनं साधितं पुरा ।**
**सार्वज्ञं तावता किं ते नैर्मल्यं चास्त्यपेक्षतम् ॥ ३३ ॥**

आपने ब्रह्मा के रूपान्तर (अवतार) मंडन को जीत कर पहले ही सर्वज्ञता सिद्ध कर दी है। परन्तु उससे क्या होगा। सर्वज्ञता के साथ निर्मलता भी चाहिए ॥३३॥

**पुरा कामकलाः शिक्षन्नैर्मल्यं जहिथ स्वयम् ।**
**यतिधर्मस्थितः, स त्वां पीठारोहार्ह्यहो कथम् ॥ ३४ ॥**

यतिधर्म में स्थित होकर पहले कामकला शिक्षण में स्वयमेव अपनी निर्मलता को छोड़ दिया। अव पीठारोहणयोग्य कैसे हो ? ॥३४॥

**मैवं देहान्तरेणैव शिक्षिता न त्वनेन ताः ।**
**भवान्तरगृही किं नु यतिर्नैर्मल्यवर्जितः ॥ ३५ ॥**

आचार्यः—निर्मलता छोड़ी ऐसी बात नहीं है। क्योंकि शरीरान्तर से कामकला शिक्षण हुआ। न कि इस शरीर से। वैसे तो पूर्व पूर्वतरादि जन्मीय शरीरों में सभी गृही हुए हैं। फिर इस शरीर में यति होने पर क्या निर्मलता रहित होता है ? ॥३५॥

**निरुत्तरायां भारत्यां शंकरोऽमितबोधभूः ।**
**सर्वज्ञपीठं विमलमारुरोह जगद्गुरुः ॥ ३६ ॥**

स्वयं सरस्वती निरुत्तर हुई तव अपरिमित ज्ञानसागर भगवत्पाद शंकर सर्वज्ञपीठारोहण कर जगद्गुरु हुए ॥३६॥

**विजयावेदनो भेरीध्वनिर्दिविषदध्वनि ।**
**सुमहानभवत्तर्हि योऽरुन्ध जगदन्तरम् ॥ ३७ ॥**

विजयावेदी भेरीध्वनि उस समय आकाश में महान् हुई, जिसने चारों दिशाओं को वधिर वना दिया ॥३७॥

न नैजमानहेतोर्नाप्यात्मगौरवकारणात् ।
स्वमतोत्कर्षसिद्धयर्थं देशिकः पीठमारुहत् ॥ ३८ ॥

अपने मान की इच्छा से नहीं, अपने गौरव को बढ़ाने के लिए भी नहीं, किन्तु वेदान्तसिद्धातरूपी स्वमत के उत्कर्षार्थ (जिससे सभी उसका ग्रहण करें) आचार्य ने पीठारोहण किया ॥३८॥

पपात सुमनोवृष्टिः सुरभिर्गगनान्मुहुः ।
सर्वे प्रमुदिता लोकाः शमं कमपि लेभिरे ॥ ३९ ॥

ऊपर से बार बार सुरभि पुष्पवृष्टि हुई। सभी लोग प्रसन्न हुए और किसी अलौकिक शम (शान्ति) का अनुभव करने लगे ॥३९॥

संस्थाप्य हस्तामलकं पद्मपादं सुरेश्वरम् ।
त्रोटकं च मठे प्रत्यक्प्रागवागुदगाश्रिते ॥ ४० ॥
अग्निमावाह्य चाषाढानानन्दानटलान् गुरुः ।
जूर्णान्निरञ्जनांश्चैव निर्वाणांश्च व्यतिष्ठिपत् ॥ ४१ ॥

इसके बाद आचार्य ने क्रमशः पश्चिम में हस्तामलक को पूर्व में पद्मपाद को दक्षिण में सुरेश्वर को और उत्तर में तोटक को शारदादि मठों में आचार्य के रूप में प्रतिष्ठित किया। और अग्नि अखाड़ा, आवाहन अखाड़ा, आनन्द अखाड़ा और अटल अखाड़े के सहित जूना अखाड़ा, निरञ्जनो अखाड़ा और निर्वाणी अखाड़ा, को प्रतिष्ठापित किया [द्रष्टव्यः—'अषाढ' शब्द का सायणाचार्य ने वेद भाष्य में असोढ—अपरिभूत अर्थ किया है। अषाढ शब्द का ही अपभ्रंश अखाड़ा है। 'ष' को ख उच्चारण आमतौर पर होता आया भी है। आजकल भी अखाड़ा उसी को कहते हैं जहाँ सीखने वाले परिभूत नहीं होते। धीरे धीरे युद्ध के अखाड़ों में भी वह रूढ़ हो गया। अषाढ़ शब्द का पाणिनीय काल में महात्मा अर्थ ही प्रायः था। 'विशाखाषाढान्मन्थदण्डयोः' ऐसा पाणिनीय सूत्र है। अषाढः प्रयोजनमस्य आषाढो दण्डः' ऐसा सूत्रोदाहरण है। दण्ड का प्रयोजन अषाढ़ है। संन्यासी दण्डधारण इसडिए करते थे कि गांवों में कुत्ता आदि से परिभव न हो। दण्डप्रयुक्तरक्षावाले दण्डी कहलाते हैं। और दण्ड के विना स्वयमेव जो रक्षित हैं वे अषाढ़ कहलाते हैं। धीरे धीरे वही शब्द मठ विशेषों का नाम हो गया जो आज अखाड़ा शब्द से प्रसिद्ध है। अन्य अखाड़ों के नाम तो ठीक ही है।

परंतु जूना अखाड़े का पूर्व नाम जूर्ण ही था। जूर्ण का अर्थ वेदभाष्यों में सायण ने पुरातन और जीर्ण किया है। यद्यपि यह वैदिक प्रयोग है। तथापि 'जूना' यह अपभ्रंश शब्द जूर्ण के पूर्व प्रचलित प्रयोग का ही परिणाम माना जाना चाहिये। सबसे पुराना अखाड़ा होने से उसका नाम जूना अखाड़ा पड़ा ऐसी कुछ लोगों की मान्यता है। परन्तु वह यथार्थ नहीं है। मान लिया जाय कि जूना सबसे पुराना है। परन्तु प्रारम्भ करते समय वह जूना नहीं था। तब उसका नाम क्या था? और कुछ लोग यह भी मानते हैं कि आवहृन अटलादि अधिक पुराने हैं। वस्तुतः जूना नये का यहां कोई सवाल ही नहीं है। सभी आचार्य प्रतिष्ठापित हैं। उन्नत्ति अवनति तो आगे पीछे सम्भव है। आचार्य शङ्कर भगवत्पाद प्रतिष्ठापित होने से सुदृढ़तर एक प्रमाण यही है कि अखाड़ों की प्रजातन्त्रीय प्रणाली किसी मामूली दिमाग की उपज नहीं हो सकती। आज के वैज्ञानिक युग की प्रजातन्त्र-प्रणाली आचार्य के दिमाग में आ गयी ऐसी कल्पना अत्यन्त आसान है। क्योंकि उनकी बुद्धिप्रतिभा अलौकिक थी यह निर्विवाद है। और हमारे इस महारूढिवादी समाज में नया कोई परिवर्त्तन मध्ययुग में किसी ने किया हो यह अशक्यकल्पनीय है। महात्माओं के वर्गीकरणानुसार ही ये अखाड़ों के नाम हैं। ब्रह्मचारी अग्निपूजन करते थे अतः उनका अग्नि अखाड़ा हुआ। जो पूजापाठादिपरायण थे वे आवाहन के हुए। जो आनन्द में रहते थे वे आनन्द अखाड़े के हुए। जो अटल दृढ़ प्रतिज्ञ थे वे अटल अखाड़े के हुए। जो जूने पुराणे विचार के या वृद्धादि थे वे जूना अखाड़े के हुए। जो निरञ्जन निर्लेप रहते थे वे निरञ्जन अखाड़े के हुए जो मुक्त जैसे रहते थे वे निर्वाणी अखाड़े के हुए। यद्यपि ये सब निरञ्जन निर्वाण होकर रहते थे ऐसी कोई बात नहीं। क्योंकि प्रजातन्त्रीय प्रणाली का शासन निरञ्जन निर्वाणों का काम नहीं है। तथापि अपना लक्ष्य यह है ऐसी धारणा उनकी रहती थी या रखना चाहिये यही आशय रहा। शुभेच्छादि सात भूमिकाओं के अनुसार भी इन अखाड़ों की रचना है॥ ४१॥

**संस्थाप्य धर्मरक्षार्थं तत्तत्स्थानेषु तान् गुरुः।**
**सार्धं परमहंसैस्तु देशिको बदरीं ययौ॥ ४२॥**

विधर्मियों का आक्रमण न हो, धर्म की रक्षा हो, एतदर्थ आचार्य तत्तत्स्थानों में सबको स्थापित कर परमहंसों के साथ बदरीनाथ की ओर

गये [द्रष्टव्यः—यहाँ तीन विभाग प्रतीत होते हैं। शारदादि पीठस्थ मठों में रहने वाला एक वर्ग। अखाड़ों में रहने वाला दूसरा वर्ग और मठादि के बिना रहने वाला तीसरा वर्ग। ये तीन ही दण्डी नागे और परमहंस हुए ] ॥ ४२ ॥

तत्रावसत्कतिपयान् दिवसान् शिष्यसंयुतः।
ज्ञानं चोपदिशन्नित्यमसङ्गः कृपया गुरुः ॥ ४३ ॥

बदरीनाथ में शिष्यों के साथ आचार्य ने कुछ दिनों तक ज्ञानोपदेश करते हुए असङ्गभाव से निवास किया ॥ ४३ ॥

भाष्यं कृतं हृदयसंतमसापहारि
ज्ञानं जनेषु विततं भवसिन्धुपोतम्।
धर्मो जगत्स्थितिकरः पुनरुद्धृतश्च
पाखण्डवादिमतखण्डनमप्यकारि ॥ ४४ ॥

हृदयगत-अज्ञानान्धकारविनाशी भाष्य बनाया। संसार सागर पार करने वाले ज्ञानरूपी पोत को लोगों में प्रसारित किया। जगत् की स्थिति के कारण धर्म का पुनरुद्धार किया। और पाखण्डवादियों का मतखण्डन भी किया ॥ ४४ ॥

अथ स भगवान् शिष्यैः सार्धं कृतार्थतया ततो
निरगमदृषिः केदाराख्यं स्थलं निजवल्लभम्।
स्वजनसुखदस्तप्तं कुण्डं प्रवर्त्य महामनाः
द्वयसमधिकत्रिंशद्वर्षावधिं समपूरयत् ॥ ४५ ॥

बदरीनाथ से भगवान् भाष्यकार स्वयं कृतार्थ होने से अपने प्रियस्थान केदार की ओर शिष्यों के साथ चले। महामनस्वी स्वजनसुखकारी आचार्य ने वहाँ तप्तकुण्ड बनवाया। और तब तक उन्होंने अपनी बत्तीस वर्ष की ऊमर भी पूरी कर ली ॥ ४५ ॥

स्फुटः कलकलारवोऽयमभवद् भुवं सद्भुवं
तदावतरतां सतां विधिहरीन्दुनाकौकसाम्।
कृतं विबुधकार्यमीश नियतश्च कालो गतः
सनाथय विभोऽधुना रजतशैलशृङ्गश्रितान् ॥ ४६ ॥

सन्त पुरुषों के उत्पत्तिस्थान पृथिवी पर उतरते हुए ब्रह्मा, विष्णु इन्द्र चन्द्रादि के कलकल शब्द स्पष्ट सुनाई देने लगे। वे बोल रहे थे—हे प्रभो! देवताओं का कार्य पूरा कर लिया। नियत समय भी पूरा हो गया। हे विभो! अब आप रजताचल कैलास में स्थित स्वजनों को सनाथित कीजिये ॥ ४६ ॥

**श्रद्धाभङ्गुरकन्धरैः सुरवरैः संदिश्यमाने तथा**
**शभौ संभ्रमभाजि नैजपदवीं गन्तुं खमुत्पश्यति ।**
**नन्दीशः समलंकृतः सहगणैरभ्येत्य तस्थौ क्षणात्**
**संवर्त्स्यंन्निजनाथपावनपदस्पर्शोद्भवद्वेपथुः ॥ ४७ ॥**

इस प्रकार श्रद्धा से नतमस्तक देवता गणों ने संदेश दिया तो भगवान् शङ्कर ससंभ्रम निजधामगमनार्थ आकाश की ओर देखने लगे। क्षण में ही गणों के साथ अलंकारविभूषित नन्दीश्वर उपस्थित हो गये। उस समय समनन्तरभावी निजनाथ-पावनचरणस्पर्शचिन्तन से नन्दीश्वर के शरीर में रोमांच हो रहा था ॥ ४७ ॥

**इन्द्रोपेन्द्रप्रजेशार्यमयममरुदश्वादिभिः स्तूयमानो**
**दिव्यैरभ्यर्च्यमानः सुरतरुकुसुमैः पार्षदैः सेव्यमानः ।**
**नन्दिस्कन्धाधिरूढस्त्रिनयनसरणीशूलपुण्ड्रावतंसः**
**शृण्वन्देवर्ष्युदीर्णं जयजयनिनदं धाम नैजं प्रतस्थे ॥ ४८ ॥**

इन्द्र, विष्णु, ब्रह्मा, अर्यमा, यम एवं सूर्यादि देवता स्तुति कर रहे थे तथा दिव्य मंदार पुष्पों से अर्चना कर रहे थे। पार्षद सेवा में लगे हुए थे। भगवान् शङ्कर नन्दीश्वर के पृष्ठ पर आरूढ़ हुए हैं। उनके तीन नयन, तीन स्रोत (गङ्गा) तीन शूल (त्रिशूल) तथा तीन पुण्ड्र (त्रिपुण्ड्र) प्रकट रूप से भूषण बन चुके हैं। देवर्षिगण जय जय कार बोल रहे हैं। और शङ्कर भगवान् निजधाम की ओर प्रस्थान कर रहे हैं ॥ ४८ ॥

**शङ्कराचार्यचरिते जयमङ्गलगुम्फिते ।**
**त्रयोविंशो गतो धामारोहणद्वयसंयुतः ॥ २३ ॥**

इति श्रीमज्जयमङ्गलाचार्य (महामण्डलेश्वर स्वामीकाशिकानन्दगिरि) विरचितं श्रीमदाद्यशङ्कराचार्यचरितं संपूर्णम् ।

॥ शुभमस्तु ॥

# परिशिष्टं

## अथ मठाम्नायोपनिषत्

ॐ ऊर्ध्वाम्नायगुरूपदेशभुवनाकारसिंहासनसिद्धाचारवन्दितं समस्तवेद-वेदान्तसारनिर्माणं परात्परं निरञ्जनज्ञानार्थषट्कचक्रजाग्रतीमयं परावाचा परात्परं सर्वसाक्षिधृतं चिन्मयं ज्योतिर्लिङ्गं निराकारं गलितं पूर्णप्रभाशोभितं शान्तं चन्द्रोदयनिभं भज मनस्तच्छ्रीगुरुचैतन्यं प्रणमामि ॥१॥

अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ।
तत्पदं दर्शितं येन तस्मै श्री गुरवे नमः ॥२॥

ॐ प्रथमे पश्चिमाम्नायः, शारदामठः, कीटवारिसंप्रदायः, तीर्थाश्रमपदे द्वारकाक्षेत्रं सिद्धेश्वरो देवः, भद्रकाली देवी ब्रह्मस्वरूपाचार्यः, गङ्गागोमती-तीर्थं स्वरूपब्रह्मचारी सामवेदप्रपठनं, 'तत्त्वमसि' इत्यादिवाक्यविचारः, नित्यानित्यविवेकेनात्मनोपास्तिम्, आत्मतीर्थे आत्मोद्धारार्थे साक्षात्कारार्थे संन्यासग्रहणं करिष्ये । ॐ नमो नारायणायेति ॥२॥

ॐ द्वितीये पूर्वाम्नायः, गोवर्धनमठः, भोगवारिसंप्रदायः, वनारण्यपदे, पुरुषोत्तमक्षेत्रं जगन्नाथो देवः, विमला देवी भद्रपद्मपादाचार्यः, महोदधितीर्थं प्रकाशब्रह्मचारी, ऋग्वेदप्रपठनं, 'तमेवैकं जानथ' 'प्रज्ञानं ब्रह्म' इत्यादि वाक्यविचारः, नित्यानित्यविवेकेनात्मनोपास्तिम् आत्मतीर्थे आत्मोद्धारार्थे साक्षात्कारार्थे संन्यासग्रहणं करिष्ये । ॐ नमो नारायणायेति ॥४॥

ॐ तृतीये उत्तराम्नायः, ज्योर्तिर्मठः, आनन्दवारिसंप्रदायः, गिरिपर्वत-सागरपदानि, बदरिकाश्रमक्षेत्रं, नारायणो देवता, पूर्णागिरी देवी, त्रोटका-चार्यः, अलकनन्दातीर्थम्, आनन्दब्रह्मचारी आथर्वणवेदपठनं 'तमेवैकं जानथ 'अयमात्मा ब्रह्म' इत्यादिवाक्यविचारः, नित्यानित्यविवेकेनात्मनोपास्तिम्, आत्मतीर्थे आत्मोद्धारार्थे साक्षात्कारार्थे संन्यासग्रहणं करिष्ये । ॐ नमो नारामणायेति ॥५॥

ॐ चतुर्थे दक्षिणाम्नायः, शृङ्गेरीमठः, भूरिवारिसंप्रदायः सरस्वती-भारती पुरी चेति पदानि, रामेश्वरक्षेत्रम्, आदिवराहो देवता, कामाक्षी देवी, शृङ्गी ऋषिः, पृथ्वीधराचार्यः, तुङ्गभद्रातीर्थं, चैतन्यब्रह्मचारी, यजु-

वेदप्रपठनं 'तमेवैकं जानथ' 'अहं ब्रह्मास्मि' इत्यादिवाक्यविचारः, नित्यानित्य-विवेकेनात्मनोपास्तिम्, आत्मतीर्थे आत्मोद्धारार्थे साक्षात्कारार्थे संन्यास-ग्रहणं करिष्ये । ॐ नमो नारायणायेति ॥६॥

ॐ पञ्चमे ऊर्ध्वाम्नायः, सुमेरुमठः, काशीसंप्रदायः जनकयाज्ञवल्क्यादि-शुकवामदेवादिजीवन्मुक्ताः, एतत्सनकसनन्दनकपिलनारदादिब्रह्मनिष्ठाः, नित्यब्रह्मचारी कैलासक्षेत्रं, मानससरोवरतीर्थं, निरञ्जनो देवता, माया देवी ईश्वराचार्यः, अनन्तब्रह्मचारी, शुकदेववामदेवादिजीवन्मुक्तानां सुसंवेदप्रपठनं 'परोरजसेसावदों' 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिवाक्यविचारः नित्यानित्य-विवेकेनात्मनोपास्तिम् आत्मतीर्थे आत्मोद्धारार्थे साक्षात्कारार्थे संन्यासग्रहणं करिष्ये । ॐ नमो नारायणायेति ॥७॥

ॐ षष्ठे आत्माम्नायः, परमात्मा मठः, सत्यसुसंप्रदायः, नाभिकुण्डलि-क्षेत्रम्, त्रिकुटीतीर्थं, हंसा देवी, परमहंसो देवता, अजपासोऽहं महामन्त्रः । ब्रह्मविष्णुमहेश्वराद्याः, जीवब्रह्मचारो, हंसविद उपास्तिः, उपाधिभेदसंन्या-सार्थं ज्ञानसंन्यासग्रहणं करिष्ये । ॐ नमो नारायणायेति ॥८॥

ॐ सप्तमे जम्बूद्वीपः, सम्यग्ज्ञानं शिखा, न सूत्रं, वेद्यवेदकः, श्रद्धानदी, विमलातीर्थम्, आत्मलिङ्गं, शान्त्यर्थे विचारः, नित्यानित्यविवेकेनात्मनो-पास्तिम् आत्मतीर्थे आत्मोद्धारार्थे साक्षात्कारार्थे संन्यासग्रहणं करिष्ये । ॐ नमो नारायणायेति ॥९॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्करा-
चार्यदृष्टा मठाम्नायोपनिषत् ।

—०॥०—

## तोटकाचार्य के कुछ महत्त्वपूर्ण श्लोक

भगवन्नुदधौ मृतिजन्मजले सुखदुःखझषे पतितं व्यथितम् ।
कृपया शरणागतमुद्धर मामनुशाध्युपसन्नमनन्यगतिम् ॥१॥

विनिवर्त्त्य रतिं विषये विषमां परिमुच्य निबद्धशरीरमतिम् ।
परमात्मपदे भव नित्यरतो जहि मोहमयं भ्रममात्ममतेः ॥२॥

विसृजान्नमयादिषु पञ्चसु तामहमस्मि ममेति मतिं सततम् ।
दृशिरूपमनन्तमृतं विगुणं हृदयस्थमवेहि सदाहमिति ॥३॥

उपरागमपेक्ष्य मतिर्विषयैर्विषयावधृतिं कुरुते तु यतः ।
तत एव मतेर्विदिताविदिता विषयास्तु ततः परिणामवती ॥४॥

मतिवृत्तय आत्मचिता विदिताः सततं हि यतोऽविकृतस्तु ततः ।
यदि चात्मचितिः परिणामवती मतयो विदिताविदिताः स्युरिमाः ॥५॥

विषयाकृतिसंस्थितिरेकविधा मनसस्तु सदा व्यवहारविधौ ।
अहमित्यपि तद्विषया त्वपरा मतिवृत्तिरवज्वलितात्मचिता ॥६॥

विषयप्रकृतिं प्रतिपन्नवतीं मतिवृत्तिमहंकरणं च मतेः ।
उभयं परिपश्यति योऽविकृतः परमात्मसदुक्तिरसौ पुरुषः ॥७॥

नभसोऽवयवो विकृतिश्च यथा घटिकादिनभो न भवेत्तु तथा ।
परमात्मन एष न चावयवो विकृतिश्च शरीरभृदित्यमृषा ॥८॥

जनितं वियदग्रणि येन जगत् परमात्मसदक्षरनामभृता ।
प्रविवेश स एव जगत् स्वकृतं खमिवेह घटं घटसृष्टिमनु ॥९॥

उदपद्यत खप्रमुखं हि जगत् परमात्मन इत्यपि याः श्रुतयः ।
अवधार्यत आभिरभेदमतिः परमात्मसतत्त्वसमर्पणतः ॥१०॥

न च तत्त्वमसीत्यसकृद्वचनं जगतो जनिमात्रविधौ घटते ।
परमात्मपदानुमतिं तु यदा जनयेत्पुरुषस्य तदा घटते ॥११॥

'सदुपासनकर्मविधानपरं' 'अथवा त्वमिति ध्वनिवाच्यमिदम्' ।
'यदि वा स्तुतये सदसीति वदेत्' श्रुतहानिरिहाश्रुतकल्पितरपि ॥१२॥

द्रविडोऽपि च तत्त्वमसीतिवचो विनिवर्त्तकमेव निरूपितवान् ।
शबरेण विवर्धितराजशिशोर्निजजन्मविदुक्तिनिदर्शनतः ॥१३॥

न मनो न मतिः करणानि च नो न रजो न तमो न च सत्त्वमपि ।
न मही न जलं न च वह्निरपि श्वसनो न नभश्च पदं परमम् ॥१४॥

करणानि हि यद्विषयाभिमुखं प्रगमय्य मतिर्विषयेषु चरेत् ।
तदु जागरितं प्रवदन्ति बुधाः न तदस्ति ममेत्यवगच्छ दृशेः ॥१५॥

करणानि यदोपरतानि तदा विषयानुभवाहितवासनया ।
विषयेण विना विषयप्रतिमं स्फुरणं स्वपनं प्रवदन्ति बुधाः ॥१६॥

करणस्य धियः स्फुरणेन विना विषयाकृतिकेन तु या स्थितता ।
प्रवदन्ति सुषुप्तिममुं हि बुधा विनिवृत्ततृषः श्रुतितत्त्वविदः ॥१७॥

इति जागरितं स्वपनं च धियः क्रमतोऽक्रमतश्च सुषुप्तिरपि ।
न कदाचिदपि त्रयमस्ति ममेत्यवगच्छ सदास्मि तुरीयमिति ॥१८॥

गगनप्रमुखं पृथिवीचरमं विषयेन्द्रियबुद्धिमनःसहितम् ।
जनिमज्जगदेतदभूतमिति श्रुतयः प्रवदन्त्युपमानशतैः ॥१९॥

कफपित्तसमीरणधातुधृतं कृशशरीरमिदं सततं हि यथा ।
प्रभवप्रभृतिप्रलयान्तमिदं जगदग्निरवीन्दुधृतं हि तथा ॥२०॥

यदु रोहितशुक्लसुकृष्णमिदं ज्वलनादिषु रूपमवैति जनः ।
तदु तैजसमाप्यमथान्नमिति ब्रुवती त्रयमेव तु सत्यमिति ॥२१॥

अवनिप्रमुखं वियदन्तमिदं विकृतस्तु भवस्य भवत्परमम् ।
अनृतं त्वपरं विकृतिस्तु यतोऽवितथं तु परं प्रकृतिस्तु ततः ॥२२॥

अणु नो न च तद्विपरीतगुणं न च ह्रस्वमतो न च दीर्घमपि ।
प्रतिषिद्धसमस्तविशेषणकं परमक्षरमात्मतयाश्रय भोः ॥२३॥

भगवद्भिरिदं गुरुभक्तियुतैः पठितव्यमपाठ्यमतोऽन्यजनैः ।
गुरुभक्तिमतः प्रतिभाति यतो गुरुणोक्तमतोऽन्यभजन्न पठेत् ॥२४॥

निगमोऽपि च 'यस्य' इति प्रभृतिर्गुरुभक्तिमतः कथितं गुरुणा ।
प्रतिभाति महात्मन इत्यवदत्पठितव्यमतो गुरुभक्तियुतैः ॥२५॥

इति श्रुतिसारसमुद्धरणम् ।

# सुरेश्वराचार्यकृत नैष्कर्म्यसिद्धि के कुछ महत्त्वपूर्ण श्लोक

खानिलाग्न्यब्धरित्र्यन्तं, स्रक्फणीवोद्गतं यतः। ध्वान्तच्छिदे नमस्तस्मै, हरये बुद्धिसाक्षिणे ॥१॥ यत्सिद्धाविदमः सिद्धिर्यदसिद्धौ न किंचन। प्रत्यग्धर्मैकनिष्ठस्य याथात्म्यं वक्ष्यते स्फुटम् ॥२॥ अज्ञानहानमात्रत्वा, न्मुक्तेः कर्म न साधनम्। कर्मापमार्ष्टि नाज्ञानं तसीवोत्थितं तमः ॥३॥ लिप्सतेऽज्ञानतोऽलब्धं कण्ठे चामीकरं यथा। वर्जितं च स्वतो भ्रान्त्या छायायामात्मनो यथा ॥४॥ भयान्मोहावनद्धात्मा रक्षः परिजिहीर्षति यद्वापरिहृतं वस्तु तथा लब्धं च लिप्सते ॥५॥ वर्जितावाप्तयोर्बेधा, ह्वानप्राप्ती न कर्मणा। मोहमात्रान्तरायत्वात् क्रियया ते न सिद्ध्यतः ॥६॥ शुभैः प्राप्नोति देवत्वं निषिद्धैर्नारकीं गतिम्। उभाभ्यां पुण्यपापाभ्यां, मानुष्यं लभतेऽवशः ॥७॥ एवं चङ्क्रम्यमाणोऽयमविद्याकामकर्मभिः। पाशितो जायते कामी म्रियते चासुखावृतः ॥८॥ इति प्रथम परिच्छेदः ॥ वर्चस्कमन्नकार्यत्वाद्यथा नात्मेति गम्यते। तद्भागः सेन्द्रियो देह, स्तद्वत्किमिति नेक्ष्यते ॥१॥ बुसव्रीहिपलालांशैर्बीजमेकं त्रिधा यथा। बुद्धिमांसपुरीषांशैरन्नं तद्वदवस्थितम् ॥२॥ प्रागनात्मैव जग्धं सदात्मतामेत्यविद्यया। मन्यसे तावदस्मीति, यावदस्मान्न नीयसे ॥३॥ स्थूलं त्यक्त्वा निरस्यैवं, नभसो नीलतामिव। देहं सूक्ष्मं निराकुर्यात्तथा कारणमेव च ॥४॥ निवृत्तायामहंबुद्धौ ममबुद्धिर्विलीयते। अहंबीजा हि सा सिद्ध्येत्तमोऽभावे कुतः फणी ॥५॥ नामादिभ्यः परो भूमा, निष्कलोऽकारकोऽक्रियः। स एवात्मवतामात्मा स्वतः सिद्धः स एव नः ॥६॥ न प्रकाशक्रिया काचिदस्य स्वात्मनि विद्यते। उपचारात् क्रिया सास्य, यः प्रकाश्यस्य संनिधिः ॥७॥ दुःखी यदि भवेदात्मा कः साक्षी दुःखिनो भवेत्। दुःखिनः साक्षिताऽयुक्ता साक्षिणो दुःखिता तथा ॥८॥ इति द्वितीयपरिच्छेदः ॥ निर्दुःखित्वं त्वमर्थस्य, तदर्थेन विशेषणात्। प्रत्यक्ता च तदर्थस्य, त्वंपदेनास्य संनिधेः ॥१॥ यावद्यावन्निरस्यायं देहादीन् प्रत्यगञ्चति। तावत्तावत्तदर्थोऽपि त्वमर्थे प्रविविक्षति ॥२॥ देहादिव्यवधानत्वात्तदर्थे स्वयमप्यतः। पारोक्ष्येणैव जानाति, साक्षात्त्वं तदनात्मनः ॥३॥ नवसंख्याहृतज्ञानो दशमो विभ्रमाद्यथा। न वेत्ति दशमोऽस्मीति, वीक्षमाणोऽपि तान्नव ॥४॥ इति तृतीयः परिच्छेदः ॥ इदमित्येव बाह्येऽर्थे ह्यहमित्येव बोद्धरि। द्वयं दृष्टं यतो देहे, तेनायं मुह्यते जनः ॥१॥ बुद्धावेव विवेकोऽयं यदनात्मतया भिदा। बुद्धिमेवोपमृद्नाति कदलीं तत्फलं यथा ॥१॥ निवृत्तसर्पः सर्पोत्थं, यथा कम्पं न मुञ्चति। विध्वस्ताखिलमोहोऽपि

मोहकार्यं तथात्मवित् ॥३॥ तरोरुत्खातमूलस्य शोषेणैव यथा क्षयः। तथा बुद्धात्मतत्त्वस्य, निवृत्त्यैव तनुक्षयः ॥४॥ बुद्धाद्वैतसतत्त्वस्य यथेष्टाचरणं यदि। शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे ॥५॥ रागो लिङ्गमबोधस्य, चित्त-व्यायामभूमिषु। कुतः शाद्वलता तत्र यस्याग्निः कोटरे तरोः ॥६॥ उत्पन्नात्मप्रबोधस्य त्वद्वेष्टृत्वादयो गुणाः। अयत्नतो भवन्त्यस्य, न तु साधनरूपिणः ॥७॥ इति चतुर्थः परिच्छेदः।

—०:❀:०—

## ग्रन्थकार के मुख्य प्रकाशन

| | |
|---|---|
| जागदीशी सामान्यलक्षणातत्त्वप्रदीपः (न्याय) | १५-०० |
| वैराग्यमन्दाकिनी | अप्राप्य |
| गोपीगीतम् अर्थद्वय (हिन्दी व्याख्या) | ,, |
| दश शान्तयः सानुवादाः | ,, |
| दक्षिणामूर्तिस्तोत्रं सवार्त्तिकं सानुवादं | ,, |
| ईशावास्यरहस्यविवरणम् | १५-०० |
| शंकरदिग्विजयः (संक्षिप्तः) सानुवादः | २०-०० |
| नारदीयभक्तिसूत्राणि सवार्त्तिकानि सानुवादानि | |
| प्रथमो भागः | १०-०० |
| द्वितीयो भागः | १०-०० |
| तृतीयो भागः | १०-०० |
| वेदान्तसिद्धान्तकुसुमाञ्जलिः सौरभसहितः | १०-०० |
| भागवतसारस्तोत्रं सोपक्रमं सव्याख्यम् | ८-०० |
| श्रीभीष्मस्तुति प्रवचन | |
| महिम्नःस्तोत्रं हरिहरपक्षानुवाद टिप्पणी सहित | |
| शिवमहिम्नःस्तोत्रं स्पन्दवार्त्तिकं सानुवादं | ३०-०० |
| गीता प्रवचन सांख्यसन्दर्भ पूर्वार्धं | ३५-०० |
| गीता प्रवचन सांख्यसन्दर्भ उत्तरार्धं (स्थितप्रज्ञदर्शन) | २५-०० |
| सुभगोदयम् अमृतझरिका, अन्वयार्थबोधिनी (तन्त्र) | २०-०० |
| ईशावास्योपनिषत्, शांकरभाष्यं वर्त्तिकसहितम् | २०-०० |
| दिव्यरसतरङ्गिणी सानुवाद सटीक | |
| वेदान्तसिद्धान्तपीयूषबिन्दुः | |
| वेदान्तसारः, वेदान्तमन्दारमाला च | |